# सामान्यनिरुक्तिः ।



श्रीगङ्गेशोपाध्यायविरचिता ।

---

श्रीरघुनाथशिरोमणिकृतटीकासहिता

तथा

श्रीगदाधरभट्टाचार्य्यकृतशिरोमणिटीका-

विवृतिसमलङ्कृता ।



पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

सङ्कलितगदाधरीविवृतिवादार्थसहिता च ।

द्वितीयसंस्करणम् ।

कलिकातानगरे

सिद्धेश्वरयन्त्रे मुद्रिता ।





पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए

PANDIT KULAPATI JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

# सामान्यनिरुक्तिः ।



अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।

तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं ज्ञायमानं सदनुमितिप्रतिबन्धकं यत् तत्त्वं वा हेत्वाभासत्वं दशाविशेषे हेत्वोरेवासाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् । यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वं तथापि ज्ञायमानस्याभासस्यात्र लक्षणं यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते अनुमितौ तूत्पत्तिरेव प्रतिबध्यते ।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च ।

इति श्रीगङ्गेशोपाध्यायविरचिता सामान्यनिरुक्तिः समाप्ता ।



अथ रघुनाथशिरोमणिकृता चिन्तामणिदीधितिः
प्रारभ्यते।

एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति। अनुमितीति यथाश्रुतमिदं हेतुदोषाणां लक्षणं तद्वत्त्वञ्च दुष्टहेतूनां तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति। तत्रानुमितिपदम् अनुमिति-निष्ठकार्य्यतानिरूपकसम्बन्धित्वेनानुमितितत्-कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा। तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्-पादेन व्यभिचाराद्यग्राह्यादिज्ञानेनान्यथासिद्ध-त्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वे-ऽपि न क्षतिरिति वदन्ति। पर्व्वतो निर्वह्नि-र्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारी-त्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति। ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्या-देरपि प्रत्येकं हेत्वाभासताप्रसक्तिः। अथ विशिष्ट-विषयज्ञानं प्रतिबन्धकं तद्घटकञ्च न विशिष्ट-

मिति चेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्याप्रसिद्धत्वादित्यनुशयेनाह यद्विति। केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वमग्रे च तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः। लिङ्गमविवक्षितं यद्विषयत्वेन यादृशविशिष्टविषयत्वेन तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः। अवच्छेदकज्ञानानतिरिक्तवृत्तित्वं तेन विशिष्टस्यासत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः। विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन तेन प्रमेयत्वादिविशिष्टे सव्यभिचारादौ नातिप्रसङ्गः। एवञ्च पक्षतावच्छेदकादिविरहविशिष्टः पक्षः पक्षनिष्ठस्तद्विरहो वा साध्याभाववद्वृत्तिसाधनं साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः येन केनापि सम्बन्धेन तद्वांश्च प्रकृतो हेतुर्दुष्टः यादृशधर्मिणि यादृशधर्मवत्ताज्ञानं

अनुमितिप्रतिबन्धकं तस्य धर्मिणस्तादृशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित्। अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहो ह्रदस्य वह्निधूमशून्यत्वं पर्वतस्य महानसीयवह्निधूमविरहित्वं मेयत्वस्य केवलधूमस्य वा वह्निव्यभिचारो विशिष्टस्य धूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः। न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम् अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यं तथाच निर्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धत्वादिति। अत्र वदन्ति यद्विषयनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरम् अनुमितौ अनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च

द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वं पक्षतावच्छेदक-
वैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तवं ग्राह्यं
व्याप्तिश्चान्वयतो व्यतिरेकतश्च वाच्या। तादृशाव-
गाहित्वप्रसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्या अन-
न्यगतिकत्वात् एवञ्च वस्तुमात्रनिश्चयादनन्तरं
निर्वह्नित्वाविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य
विरोध्यविषयकत्वात् एवं साध्यनिश्चयोत्तरं
तस्याननुमितावपि मानसज्ञानाविरोधित्वाच्च
तादृशि पक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्य-
निरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य च
अवगाहिनो ज्ञानस्य यद्विषयं ज्ञानं विरोधि-
विषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतु-
दोषत्वं ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रह-
विरोधिग्रहविषयत्वम् एवंविधैव रीतिरुत्तरत्र
सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि
केचित्। केचित्तु यादृशपक्षकयादृशसाध्यक-
यादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावद-
न्यान्यत्वमेकमात्रदोषस्थले च तत्त्वमेव हेत्वा-
भासत्वं स चातिरिक्त एवान्यो ऽन्याभाव इति
न वैयर्थ्यं पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभि-

प्रायेण व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात् शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति प्राहुः। स्यादेतत् शब्दोऽनित्यः शब्दत्वात् इत्यत्रासाधारणेऽव्याप्तिः सर्वसाध्यवद्व्यावृत्तेस्तत्रासत्त्वात् एवं शब्दोऽनित्यः कृतकत्वात् इत्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ताविरहादित्याशङ्कां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति। हेत्वोः सद्धेत्वोः असाधारणः पक्षमात्रवृत्तिः सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा तयोर्दशाविशेषे हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायामाभासत्वात् अनुमित्यजनकत्वात्तद्धेतुर्हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति न तु तद्विषयस्य दोषत्वम् असत्त्वात् अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात्। कोऽहि साध्याभावतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः निर्युक्तिकस्तु प्रवादो न श्रद्धेयः। यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः

तच्च द्विविधं विषयरूपं साधारण्यादिबाधे च प्रमितसाध्याभाववान् पक्षः तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात् अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकं तद्वत्त्वञ्च ज्ञानस्यैव तद्विषयस्य हेतोरपीति तन्न। तद्वत्त्वं हि हेतोर्नाभेदेन बाधे तदभावात् अतएव नाश्रयतया वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च। साध्याभाववत्पक्षस्यैव साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च यथाकथञ्चित्तद्वत्त्वस्य चातिप्रसञ्जकत्वात् विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो वह्निरिव दाहस्य। अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तं भवति च प्रतिबन्धकी-भूतविरोधि-सामग्रीकालीनत्वादिविशिष्टे परामर्शे तथा इति चेत् न वैकालादिसाधारणकारणघटिता सामग्री क्वापि प्रति-

वच्छिका विशेषतस्त्वञ्च तत्सत्त्वे कार्य्योत्पादस्य दुर्वारत्वात् किन्तु विरोधिपरामर्शस्तथा यदि च तत्सत्त्वेऽपि तत्साध्ये बाधावतारान्नानुमिति-प्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यग्रहाभाव-स्येव तदभावस्यापि वैशिष्ट्यान्तत्र निवेश्यतां यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे-नानुमितिस्तथा तथाविधबाधादिग्रहेऽपीत्यति-प्रसङ्गः । नचातीतादौ लिङ्गे विरोधिपरामर्श-कालीनत्वमपि यद्यपि तद्विषयत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यं सत्प्रति-पक्षे च विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन तस्य समूहालम्बन-रूपतया हेतुद्वयविषयत्वादिति तदपि तुच्छम् । साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञान-प्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः विशिष्टविषयत्वेन प्रतिबन्धकत्वं विशिष्टञ्च तत्राप्रसिद्धमिति चेत्तर्हि किं सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः यथाकथञ्चित् सम्बन्धेन तद्वत्त्वञ्चातिप्रसक्तं धूमादेरपि ज्ञान-

रूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात् यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षितेति हेतावस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन।

यद्यपीति स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात्। नचैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात् तत्रानुकूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुमितेश्चानुत्पत्तेरिति भावः। यद्वेत्याद्यभ्युच्चयमात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात्।

इति श्रीरघुनाथशिरोमणिकृता सामान्यनिरुक्ति-
टीका समाप्ता।

---

# अथ गदाधरभट्टाचार्य्यविरचिता शिरोमणि-टीकाविवृतिः प्रारभ्यते।

हेत्वाभासनिरूपणे प्रसङ्गस्यापि सङ्गतित्वं सम्भवतीति व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्मता-विरोधितद्विरहवतो दुष्टहेतोः स्मरणादतस्तदप्रदर्शकमूलस्य न्यूनतां परिजिहीर्षुः प्रसङ्गस्यापि तन्निरूपणप्रयोजकत्वमाह। एतावतेति। परिकरः व्याप्तिपक्षधर्मते निरूप्ये अत्यन्तमुक्त-क्रमेण दुष्टहेतोः। स्मृतत्वस्य प्रसङ्गनिर्वाहकस्य लाभाय तत्प्रसङ्गा-दिति सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतेरित्यर्थः। तज्ज्ञानजन्य-जिज्ञासाधीनत्वं पञ्चम्यर्थः अन्वयश्चास्य निरूपणमित्यनेन तत्त्वनिर्णयविजयप्रयोजकत्वादिति मूलम्। यद्यपि हेत्वाभास-निष्ठतत्त्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युप-योगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरं तथापि तन्मात्र-परत्वे सङ्गत्यप्रदर्शनेन मूलस्य न्यूनता स्यादिति तस्यैककार्य-कारित्वरूपसङ्गतिप्रदर्शनपरत्वमपि सम्भवतीति स्फुटीकर्तुमाह तत्त्वनिर्णयादिति। आदिपदाद्विजयपरिग्रहः तत्कार्यकारित्वात् सपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वात्। प्रयोजकत्वं च जन-कतावच्छेदकादिसाधारणं स्वविषयकज्ञानकार्यं प्रति स्वस्य तथात्वमक्षतमेवेति तत्त्वनिर्णयः प्रमितिकोटिनिश्चयः तत्र व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव तद्विपरीतकोटिसा-धकस्य हेत्वाभासत्वज्ञानमप्युपयुज्यते प्रतिबन्धकीभूतविपरीत-कोटिव्याप्यवत्ताज्ञानाप्रामाण्यग्राहकत्वादित्युभयोस्तत्त्वनिर्णयप्र-योजकत्वम्। अथवा तत्त्वनिर्णयः साध्यवत्ताज्ञाने प्रमात्वनिश्चयः तत्रानुमापकहेतोः व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव विप-

रीतकोटिसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते। प्रकृतसाध्यग्रहाप्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वग्रहविघट्टनद्वारा विजयप्रयोजकत्वं च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्न्यायप्रयोगद्वारा बोध्यम्। मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः। यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहालम्बनज्ञानविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया बाधादिज्ञानप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात् तत्र तत्र हेतावव्याप्तिश्च। यद्विषयकत्वेनेत्यादिलक्षणे च तृतीयाया अवच्छेदकत्वार्थतया सुतरां तथेत्यत आह। यथाश्रुतमिति इदमेतत् लक्षणत्रयं ननु हेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वात् दुष्टहेतुनिर्णयस्यैव प्रतिज्ञातत्वात्तल्लक्षणमेवाकाङ्क्षितमतस्तदनुक्तौ मूलस्य न्यूनता। अन्यविधव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि तेचेत्यादिना दुष्टहेतूनामेव विभजनात् दुष्टहेतुनिरूपणस्य अप्रतिज्ञातत्वे तदसङ्गतेः। एवं दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवतारात्। उपधेयसङ्करेऽपीत्यादिग्रन्थस्य उपाध्यसङ्करेण विभागोपपादनपरस्यासङ्गतिरित्यत आह तद्वत्त्वस्येति। तादृशदोषवत्त्वस्येत्यर्थः दुष्टहेतूनां लक्षणमित्यनुषज्यते स्फुटमितिशेषः। तथाच दुष्टहेतुनिरूपणस्य प्रकृतत्वेऽपि दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटतया लाभेन नोक्तानुपपत्तिरितिभावः। तदभिप्रायेणैवेति दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः। अनुमितिपदस्यानुमितिसामान्यपरत्वेऽसम्भवात् यत्किञ्चिदनुमितिपरत्वेऽतिप्रसङ्गात् प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमा-

वश्यकं तथाच व्यभिचारादावव्याप्तिः। वह्निर्धूमव्यभिचारी इति ज्ञानाभावस्य पर्वतो धूमवानित्यनुमित्यजनकत्वात् लक्षणया तस्य प्रकृतानुमितिकारणज्ञानमात्रपरत्वे च बाधादावव्याप्तिः। बाधादिज्ञानस्य परामर्शाप्रतिबन्धकत्वादतोऽनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे तत्रेति। तादृशवाक्यलक्षण इत्यर्थः। लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह अनुमितिनिष्ठकार्येति। अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति। अतो न वक्ष्यमाणातिप्रसङ्गः। निरूपकत्वञ्चात्र यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियोगित्वाभावादनुमित्यसङ्गहः। अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाय अत्र पर्वतो वह्निमान् ह्रदश्च तथा इत्यादिसमूहालम्बनानुमित्यादिविरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने दोषताप्रसङ्गः प्रकृतानुमितिनिष्ठकार्यतानिरूपक सम्बन्धिग्रहत्वस्य प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशासम्भवात्। तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे चानुमित्यविरोधिनि व्यभिचारादौ परामर्शाविरोधिनि बाधादौ चाव्याप्तिः। उभयविरोधिपक्षाप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्त्वादतः कल्पान्तरमाह साध्यव्याप्येति। प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्न तद्व्याप्तिविशिष्ट प्रकृत हेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः। एवञ्च तादृशसमूहालम्बनानुमितेर्व्याप्तिविषयकतया व्यभिचारज्ञानादिप्रतिबध्यत्वान्न व्यभिचाराद्यसङ्गहः दर्शित-

समूहालम्बनानुमितिप्रतिबन्धकतामादायातिप्रसङ्गस्य वारणाय सामान्यपदं तथाच तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं पर्यवसितार्थः। अत्र च साध्यतावच्छेदकावच्छिन्नादिप्रकारकानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेति इत्याद्यनुमितौ ह्रदो न वह्निमानित्यादिनिश्चयस्याप्रतिबन्धकत्वात् नातिप्रसङ्गः। बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिषु अव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः। द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ तथाविधबाधनिश्चयस्य प्रतिबन्धकत्वात् तद्दोषतादवस्थ्यमतः पक्षतावच्छेदकावच्छिन्नत्वोपादानम्। अवच्छेदकत्वञ्च तत्पर्य्याप्त्यधिकरणत्वं तेनातेजस्वी पर्वतो वह्निमानित्यादौ विशिष्टपर्वतत्वादिमति वह्न्याद्यभावरूपबाधस्य काञ्चनमयः पर्वतो वह्निमानित्यादौ चाश्रयासिद्धेः। शुद्धपर्वतत्वाद्यवच्छिन्नपक्षकानुमित्यविरोधित्वेऽपि नासङ्गतिः एवमग्रेऽपि बोध्यम्। साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वानिवेशे परामर्शाविरोधितया बाधसत्प्रतिपक्षयोरव्याप्तिः। तत्र प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेऽपि तद्दोषतादवस्थ्यं वह्नित्वावच्छिन्नाभावादिनिश्चयस्य धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद इत्याद्यनुमित्यप्रतिबन्धकत्वात्। यत्तु साध्याप्रसिद्धिवारणप्रयोजनकत्वं तदुपादानस्य इति तु न सत्। वह्निर्न काञ्चनमय इत्याद्यादिनिर्णयस्य पक्षे शुद्धवह्नित्वादिना वह्न्याद्यनुमित्यविरोधित्वेऽपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावितत्त्वात्तस्य काञ्चनमयवह्निव्याप्यधूमवान् पर्वत इत्यनुमितिविरोधितया तत्र लक्षणसमन्वयात्। द्वितीयदलप्रवेशाद्व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिषु नाव्याप्तिः। तत्रापि साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वनिवेशाद्व्यभि

चारविरोधयोर्नाव्याप्तिः । वह्निर्धूमव्यभिचारीति ज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तिज्ञानसम्भवात् तद्दोषतादवस्थ्यमतो व्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वोपादानम् । अन्वयव्याप्तिव्यतिरेकव्याप्ती विशेष्योपादाय तदुभयविशिष्टहेतुप्रकारत्वमेव निवेश्यम् । एकमात्रव्याप्त्युपादाने साधारण्यानुपसंहारित्वयोरेकतरासंग्रहप्रसङ्गात् इत्यग्रे व्यक्तीभविष्यति । तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायास्तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनानुगमय्य निवेशनस्य न सम्भवति साध्याभाववद्वृत्तित्वज्ञानदशायां केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्त्वज्ञानोत्पत्त्यासाधारण्यादेस्तादृशप्रकारताशाल्यनुमितिसामान्यविरोधित्वाभावात् । व्याप्तिविशिष्टविषयकत्वमात्रस्य तद्विशिष्टहेतुतावच्छेदकावच्छिन्नविषयकत्वमात्रस्य वा निवेशे स्वरूपासिद्धावव्याप्तिरतः पक्षांशे तादृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्न प्रकारकत्वनिवेशः पक्षांशे व्याप्तिविशिष्टप्रकारकत्वमात्रनिवेशेऽपि तद्दोषतादवस्थ्यम् । धूमाभाववान् ह्रद इत्यादिज्ञानस्य द्रव्यत्वादिना हेतुमत्ताज्ञानाविरोधित्वात् साधारण्याद्यव्याप्तिश्च वह्नित्वाद्यवच्छिन्नधूमाभाववद्वृत्तित्वादिग्रहस्य धूमादिव्याप्तिविशिष्टतत्तद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाविरोधित्वात् अतो हेतुतावच्छेदकावच्छिन्नत्वनिवेशः । पक्षांशे साध्यादिप्रकारकसंस्कारादेराहार्यज्ञानादेश्च बाधादिज्ञानाप्रतिबध्यत्वादसम्भव इत्यतस्तादृशानुमितिव्यापकतानिवेशः । साध्यव्याप्यहेतुधर्मितावच्छेदकसाध्यवत्त्वज्ञानस्यैव साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकतया तादृशाकार-लिखन-स्वरसात्तादृशहेतुविशिष्ट-पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यत्वस्य लक्षणघटकत्वोपगमे पर्वतत्वाद्यवच्छेदेन

वह्नेः साध्यत्वे तत्सामानाधिकरण्येन साध्याभावादेरदोषत्वप्रसङ्गः सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्वतत्वावच्छेदेन वह्न्यादिज्ञानं प्रत्येव प्रतिबन्धकतया धूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकवह्न्यादिज्ञानाप्रतिबन्धकत्वादिति तदुपेक्षितम् । नच विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेऽपि शुद्धपर्वतत्वावच्छिन्नसंयोगसम्बन्धादेर्यत्र संसर्गता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकं तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन वह्न्याद्यवगाहित्वादिति वाच्यम् । धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते नतु तदेकदेशावच्छिन्नत्वमपि तद्धर्मावच्छिन्नविशेष्यतानिरूपित तदेकदेशव्यापकत्वावच्छिन्नसंसर्गतायां अप्रामाणिकत्वात् । अथ लिङ्गोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात्तादृशसंसर्गताभ्युपगम आवश्यकः अन्यथा शुद्धपर्वतत्वावच्छेदेन हेतुमत्त्वज्ञानस्थले हेतुविशिष्टपर्वतत्वावच्छिन्नसंयोगादिसंसर्गकानुमितेरेवाभ्युपगमे पर्वतत्वादिसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेऽपि तत्र तथाविधसाध्यनिश्चयवतोऽनुमित्यापत्तिः ।

न हि सामानाधिकरण्येन बाधसिद्ध्योः सत्त्योरनुमितिं कश्चिदुपैति तादृशबाधादिग्रहस्य क्वचिदप्यनुमितौ प्रतिबन्धकत्वाभावात्तेषां हेत्वाभासताविलोपापत्तिश्चेति चेदेवमपि लिङ्गानुपधानमते तादृशविषयतायां मानाभाव एव प्रकृतग्रन्थस्तु न लिङ्गोपधानमताभिप्रायकः तन्मतेऽनुमितेः सर्वत्रैव कारकतया तादृशाकरणस्याव्यावर्त्तकतया अनुमितिपदस्य तादृशानुमितिपरत्वप्रदर्शनासङ्गतेः । किं त्वितु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्याख्याय लिङ्गोपधानमते यथाश्रुतपरतामाश्रयते । साध्यव्याप्येत्यादिना इत्याकारानुमितिपरं अनुमितेरित्याकार-

तामताभिप्रायकमिति व्याचष्टे। व्याख्याप्रयोजनं स्फुटयति तेनेति। एकत्र वह्नित्वाद्येकधर्मावच्छिन्ने व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः। अन्यस्य परामर्शात्तद्वह्नित्वादिरूपापरधर्मावच्छिन्ने व्याप्तिपक्षधर्मतायवगाहिज्ञानात् व्यभिचारादित्यस्यानुमित्यजनकत्वेऽपीत्यनेन सम्बन्धः यत्र तद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथञ्चित्तद्रूपावच्छिन्नलिङ्गकपरामर्शः तत्र क्षणैकविलम्बेनानुमित्युपगमे व्यभिचाराभावात् न तत्र व्यभिचारो दर्शितः।

ननु तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचारादिज्ञानाभावस्य हेतुत्वोपगमात् न व्यभिचारः। तद्धर्मावच्छिन्नलिङ्गकत्वं च स्वाव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वं तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत् तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यं तेन धूमव्याप्यवह्निमानयमित्याकारकशब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षादिजन्यो धूमव्यभिचारी वह्निधूमव्याप्येऽयनवान् इत्याकारकसमूहालम्बनग्रहस्तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नित्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरित्यत आह व्याप्त्यादीति। क्लृप्तकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाभावव्यतिरेकेणानुमितिव्यतिरेकस्यासिद्धत्वादिति भावः। व्याप्तिज्ञानादेर्व्यभिचारज्ञानाभावेनान्यथासिद्धत्वशङ्का प्रागेव निराकृता न क्षतिमे व्यभिचाराद्यवव्याप्तिः। यत्रासद्धेतुविशेषे तादृशानुमितेरप्रसिद्धिस्तत्रत्यदोषे अव्याप्तेर्वक्ष्यमाणतया एतादृश यथाश्रुतव्याख्यायामनिर्भरसूचनाय वदन्तीत्युक्तम्। पर्वतो वह्निमान् धूमादित्यादिसद्धेतुस्थले बाधादिभ्रमविषयेऽतिव्याप्तिवारणाय यथार्थपदं सार्थकयति पर्वतो निर्वह्निरिति। अत्रेति पदस्य त्रितयस्थले सम्बन्धात् भ्रमत्रयलाभः प्रत्येकभ्रम-

मादायातिप्रसङ्गसम्भवात्। तादृशसमूहालम्बनभ्रमपर्य्यन्तानुधावने वैफल्यादिति ध्येयम्। प्रथमभ्रमोऽनुमितौ विरोधी अन्त्यौ च तज्जनकज्ञाने तथा तयोरपि प्रथमेऽन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमाद्यंशे भ्रमत्वम्। अन्त्ये च प्रमेयत्वाभाववद्वृत्तित्वस्याप्रसिद्ध्या न तद्भ्रमत्वं किन्तु अभावांशे अनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमिति एतादृशविशेषमाहृत्य शिष्यव्युत्पादनायानेकविधभ्रमकथनम् इदन्तु अवधेयम् अभिधेयत्वं प्रमेयत्वव्यभिचारीति तत्र स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वभ्रमो वाच्यः। प्रतियोगितांशे साध्यतावच्छेदकधर्मावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोः साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात्। एवञ्च भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगिकत्वाप्रसिद्ध्या तादृशभ्रमानुपपत्तिः प्रतियोगितांशे सम्बन्धविशेषाद्यवच्छिन्नत्वस्य भ्रम इत्यपि न युक्तम्। तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तिः। नच तेन सम्बन्धेन प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः। नतु तदवच्छिन्नप्रतियोगिताकत्वसंसर्गक इति वाच्यम्। लाघवात् प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकज्ञानस्याकिञ्चित्करत्वात् अत्राहुः स्वावच्छिन्न-साध्यतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकत्वमेव अभावस्य साध्याभाववद्वृत्तित्वरूपव्याप्तिघटकं लाघवात् एवञ्च तादृशसम्बन्धेनाभावांशे साध्यतावच्छेदकप्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्वत्वादेः प्रसिद्धे न तादृशसम्बन्धेन प्रमेयत्वादेरभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति किञ्चिदनुपपन्नम्। अन्ये

तु प्रथमे साध्याभाववदवृत्तित्वज्ञानविरोधी हेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य भ्रमः द्वितीये च तदप्रसिद्धा व्यापकसामानाधिकरण्यग्रहविरोधी साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य भ्रमोऽभिहितः असमानप्रकारकज्ञानस्याविरोधितया द्विविधव्यभिचारसंग्रहाय द्विविधव्याप्तिविषयकसमूहालम्बनज्ञानस्यैव लक्षणे प्रवेश्यत्वात् । नच हेतुः साध्यस्य व्यभिचारीत्यतः साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया तदवगाहिज्ञानस्याभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्याकारकता न उपपद्यत इति वाच्यम् । यतोऽभाववदवृत्तित्वं समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं इयमेव हेतुः साध्यस्य व्यभिचारीति अत्र व्यभिचारपदार्थः तत्रादिमव्यभिचारतात्पर्य्यस्थले व्यभिचारपदार्थैकदेशभावानुयोगितारूपषष्ठ्यर्थस्य तत्र प्रकृत्यर्थतावच्छेदकवह्नित्वाद्यवच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः मत्वर्थीयार्थस्य स्वरूपसम्बन्धवान् तस्याभेदेन प्रथमान्तार्थेऽन्वयः द्वितीये तत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्यान्वयः । षष्ठीप्रकृतेस्तद्धर्मपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे तस्य च तद्धितार्थसम्बन्धिन एकदेशघटकत्वरूपसम्बन्धे सम्बन्धिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः ।

एवञ्चोक्तवाक्यात् तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यापि लाभात् तत्र तदवगाहिभ्रमस्य दर्शिताकारतासम्भवादित्यपि वदन्ति । भ्रमादिति पञ्चम्यर्थः प्रयुक्तत्वं तस्य प्रतिबन्धपदार्थेऽनुत्पादेऽन्वयः । यथार्थेति यथार्थपदेन स्वव्यधिकरणप्रकारावच्छिन्ना या या विष-

यता तत्तदनिरूपकत्वरूपस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तमादाय दोष इति भावः। अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावतिप्रसङ्गवारणेऽपि असद्धेतुस्थले तादृशप्रमाविषयदोषघटकसाध्यादेः प्रत्येकं दोषत्वापत्तिर्दुर्वारैवेति। तदर्थं प्रकारान्तरानुसरणे च ततएव पूर्वदोषस्यापि वारणसम्भवे यथार्थपदं व्यर्थमिति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाघटितलक्षणान्तरानुसरणे वीजत्वमाह नन्विति। एकदेशस्यापि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्य इष्टत्वादाह प्रत्येकमिति प्रत्येकपदार्थपर्य्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः। हेत्वाभासतापत्तिः यद्रूपावच्छिन्नज्ञानस्यानुमित्यविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपावच्छिन्नमात्रज्ञानाद्धेतोर्दुष्टत्वव्यवहारस्यानुदयेन,इष्टापत्तिर्न सम्भवतीति भावः। यादृशविशिष्टविषयकत्वं तादृशानुमितिविरोधितानतिरिक्तवृत्तिस्तत्त्वमितिविवक्षया साध्यादौ नातिव्याप्तिरित्याशयेनाशङ्कते अथेति। विशिष्टविषयकं साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेव तदघटकं च तादृशविशिष्टघटकप्रत्येकपदार्थविषयकत्वञ्च न विशिष्टं न तादृशविशिष्टनिरूपितं तथा च प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकताया अतिरिक्तवृत्तित्वात् नातिव्याप्तिरिति भावः। व्यर्थमिति यथार्थपदानुपादानेऽपि सद्धेतुस्थलेऽतिव्याप्तिवारणसम्भवात्। ननु तत्र भ्रमविषयप्रत्येकपदार्थस्योक्तरीत्या वारणेऽपि तद्विषयविशिष्टेऽतिव्याप्तिरत आह भ्रमविषयेति। अप्रसिद्धत्वादिति तथाच नातिव्याप्तिरिति भावः। केचित्त्विति नन्वस्य दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः। तेषामप्यनुमितिविरोधियथार्थज्ञानविषयत्वात् न च ह्रदादिपक्षकवह्न्यादिसाध्यकस्थले वह्न्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुत्वमिष्टं

वेति वाच्यम्। तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं यदि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमिति विरोधि यथार्थज्ञानविषयत्वमात्रं तदा ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमिति प्रतिबन्धकप्रमाविषयवह्न्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरित्याशङ्कां परिजिहीर्षुः तादृशाभावप्रतियोगिनां ज्ञानमिति षष्ठीसमासमादृत्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वमर्थं व्याख्यास्यति तच्च ज्ञायमानदोषस्य प्रतिबन्धकतामतएव सङ्गच्छतेऽतस्तन्मतएवालम्ब्याह तत्रेति। तेषु लक्षणेषु मध्ये इत्यर्थः। तृतीयलक्षणस्य सर्वमतएव ज्ञायमानदोषप्रतिबन्धकतामताभिप्रायकतया दृष्टान्तत्वेनोपन्यासः। तदर्थञ्चेति तान् दोषानादाय लक्षणं सङ्गमनीयमिति दर्शयितुं व्यभिचारादय इति। ननु तेन रूपेण लक्षणघटकत्वमित्यवधेयमेवञ्च यथार्थपदादाने दुष्टत्वभ्रममादाय प्रकृतहेतुभिन्नेऽतिप्रसङ्ग इति यथार्थपदसार्थक्यम्। यद्यपि पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नसाधने धूमत्वाद्यवच्छिन्नो दुष्ट इत्यादेः सद्धतौ दुष्टत्वव्यवहारस्य नापत्तिस्तत्र तत्तत्साध्यपक्षहेतुकानुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वस्य एव प्रत्येतव्यत्वात्तादृशानुमिति प्रतिबन्धकबाधव्यभिचारादेश्चाप्रसिद्धत्वात् ह्रदादौ वह्न्यादिसाधनमादाय सर्वत्रैव दुष्टत्वव्यवहार इष्टः। तथापि धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ वह्नित्वाद्यवच्छिन्नहेतुकधूमत्वावच्छिन्नसाध्यकानुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वप्रत्ययात् वक्ष्यमाणसम्बन्धावच्छिन्नतादृशानुमिति। प्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपप्रसिद्धदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्येणापि तथा व्यवहारः स्यात्। नच तत्र विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्यालाभा रास-

भाद्यंशे तद्भावेनायमतिप्रसङ्ग इति वाच्यम्। तथा सति दोषपदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वालाभात् तल्ला-भानुरोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटकहेतौ वह्नित्ववैशिष्ट्यरूपस्य तृतीयान्तार्थस्य तत्प्रकारतायामवच्छिन्नत्वार्थतृतीयान्तलभ्यवह्नित्वाद्यवच्छिन्नत्वस्य अन्वय इत्यस्य एव उपगन्तव्यत्वात्। न च विशेष्ये वह्नित्वादिधर्मबोधकपदसमभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकोऽर्थः। अथवाऽनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वावच्छिन्नहेतुकानुमिति रूपविशेषलाक्षणिकत्वं धात्वर्थेऽनुमित्यन्तर्भावे साधनपदार्थानन्वयप्रसङ्गात्। तथाच विशेष्य एव तृतीयान्तार्थवैशिष्ट्यान्वयोपगमान्नोक्तातिप्रसङ्ग इति वाच्यमेवमपि वह्निना धूमसाधने रासभो दुष्ट इत्यादिभ्रममादायातिप्रसङ्गादिति यथार्थपदसार्थक्यमथवा इतरभेदानुमापकमेवेदं लक्षणं तथाच पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्टलक्षणस्य तथाविधानुमितिविरोधिव्यभिचारादिभ्रममादाय सद्धेतौ इतरभेदव्यभिचारात् यथार्थपदं ज्ञानं च अत्र स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धावगाहि ग्राह्यम्। तेन प्रकृतहेतुभिन्नस्य सम्बन्धान्तरेण दोषप्रमाविषयत्वेऽपि नातिप्रसङ्गः। अग्रेऽपि ईदृशसम्बन्धेनैव तद्वत्त्वं वाच्यम्। अथ ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिना बाधादिदोषाणां प्रतिबन्धकता न सम्भवति साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र दोषाणामज्ञायमानतया अविरोधित्वेन अनुमित्यापत्तेः किन्तु ज्ञानीयपक्षतावच्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्नविषयतावत्त्वेन तादृशविषयतया ज्ञानविशिष्टत्वेन वा तच्च रूपं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेति तेषामेव तादृशभ्रमदशायां विरोधित्वान्नोक्तापत्तिः।

एवञ्च सद्धेतूनामपि प्रतिबन्धकतावच्छेदकनिरुक्तविषयताश्रयवह्न्यभावादिप्रमाविशेष्यत्वादतिव्याप्तिरिति चेन्न । यद्रूपावच्छिन्नविषयतासामान्यं प्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयम् । ह्रदो वह्निमान् धूमादित्यादौ तादृशं रूपं ह्रदे वह्निर्नास्ति इत्यादिज्ञाननिरूपिततद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वावच्छिन्नविषयतानिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयतात्वेन दोषनिष्ठानुमितिप्रतिबन्धकतायामवच्छेदकत्वात् सद्धेतुस्थले च तादृशं रूपं न केवलवह्न्यभावत्वादिकं तथा तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्मिविषयकज्ञाननिरूपिततादृशविषयतानामनुमितिप्रतिबन्धकतानवच्छेदकत्वात् पर्वतविशिष्टवह्न्यभावत्वादिविशिष्टं च न किञ्चिद्वस्तुप्रसिद्धमिति नातिप्रसङ्गः । तृतीयमपि लक्षणमनयैव रीत्या परिष्करणीयमिति इदं बोध्यमस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतामतानाश्रयणेऽपि यद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषय तद्धेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षसाध्यकस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य यथार्थपदसार्थक्यमुपपादयितुं शक्यते । तथापि दुष्टस्य दोषघटितत्वानुरोधेन तन्मतमालम्बा षष्ठीसमास आहृत इति । ननु द्वितीयतृतीयलक्षणयोर्दोषेष्वतिव्याप्तिरव्याप्तिश्च क्वचिद्धेतौ यत्पदेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह तत्त्वमित्यस्येति । प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितं तत्त्वमित्यस्य यथाश्रुतार्थकत्वादनुरोधादतस्तथैवाह आद्यस्यैवेति ईदृशव्याख्याया निर्दोषत्वात् प्राहुरित्युक्तं लिङ्गज्ञानस्येति । लिङ्गांशनिवेशस्य निष्प्रयोजनकतया तस्याविवक्षितत्वमाह लिङ्गमिति । यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं तच्चेदमनतिरिक्तवृत्ति-

स्वरूपमिदानीं निवेश्यते तदासम्भवः विशिष्टस्यानतिरिक्ततया वह्न्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य शुद्धह्रदत्वावच्छिन्नविषयकज्ञानेऽपि सत्त्वेनानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वादतः स्वरूपसम्बन्धरूपमेव तद्वाच्यं तथाच पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकभ्रमविषयवह्न्यभावादावतिव्याप्तिस्तद्विषयकत्वस्यापि प्रतिबन्धकतावच्छेदकघटकत्वात् असम्भवभयेन चावच्छेदकतापर्य्याप्तिनिवेशनासम्भवात् अतो यद्विषयकत्वेनेति पदं व्याचष्टे यादृशविशिष्टविषयकत्वेनेति यादृशविशिष्टविषयकत्वेन यद्रूपावच्छिन्नविषयताकत्वेन इत्यर्थः। एवञ्च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमर्थः। व्याख्याप्रयोजनं प्रकाशयति तेनेति। यत्प्रकारकत्वेन प्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गसम्भवः। पर्वतादावतिप्रसङ्गसम्भवेऽपि यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारकत्वेनानुमितिप्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषसम्बन्धावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतादिनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वात् तेन सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रसिद्धधूमादिरूपहेतावसत्त्वात्तत्र दुष्टताव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यकेत्युक्तं भ्रमपदं निश्चयसामान्यपरं तेन सद्धेत्वादौत्यादिपदग्राह्यसाध्यशून्यपक्षकदुष्टहेतौ अनुमितिप्रतिबन्धकप्रमाविषयसाध्याभावादेरेव सत्त्वेऽपि नासङ्गतिः इति उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विवक्षणीयं विशेषणीभूतवह्न्यभावाद्यविषयके शुद्धह्रदत्वादिना वह्न्यभावविशिष्टह्रदादिविषयकज्ञाने वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविलक्षणविषयतानिरूपकत्वस्यासत्त्वेनोक्तासम्भवानवकाशात्।

तथा च केवलवह्न्यभावत्वाद्यवच्छिन्नविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात् नातिप्रसङ्ग इत्यर्थः । ननु स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽयमेवातिप्रसङ्गो दुर्वारः। अप्रामाण्यज्ञानाभावादिविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणमित्येतादृशविवक्षया तादृशातिप्रसङ्गवारणे पुनरसम्भवः वह्न्यभावत्वादिना घटाद्यवगाहिनो वह्न्यभाववान् ह्रद इत्यादिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वाद्यवच्छिन्नप्रकारता निरूपिताभावत्वावच्छिन्नप्रकारता निरूपितह्रदत्वाद्यवच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकताया वक्तव्यतया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतायाः तादृशप्रकारता निरूपितह्रदत्वावच्छिन्नविषयतात्वेनावच्छेदकत्वेऽपि अप्रामाण्यज्ञानाभावादिविशिष्टवह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयताकनिश्चयत्वस्यावच्छेदकतापर्याप्त्यनधिकरणत्वादतः तृतीयाद्या अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं स्फुटयति अवच्छेदकत्वं चेति। इह लक्षणे घटकत्वं सप्तम्यर्थः । न च विशिष्टदोषविषयकत्वस्याप्रतिबन्धकसंशयादौ सत्त्वात् पुनरसम्भव इति वाच्यम्। ज्ञानस्येत्यत्र ज्ञानपदमनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरं षष्ठ्यर्थश्च आधेयत्वं तस्य यद्विषयकत्वेऽन्वयः एवञ्च तादृशनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिस्तादृशत्वस्य विवक्षणीयतयाऽसम्भवानवकाशात् अनतिरिक्तवृत्तित्वं च स्वव्यापकतत्कत्वम्। ननु तच्छून्यावृत्तित्वं विशिष्टस्य विशेष्यीभूतविशिष्टविषयकत्वानतिरिक्ततया तस्यातिप्रसक्तत्वे विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटकत्वात्। यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवानतिरिक्तवृत्तित्वमतो नोक्तरीत्याऽसम्भव इति तदसत् तथा सति मूलोपात्तस्य ज्ञान-

स्येत्यस्य वैयर्थ्यप्रसङ्गात् ह्रदत्वाद्यवच्छिन्ना या वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकयत्किञ्चिज्ज्ञानीयविषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वावच्छिन्नेऽतिप्रसङ्गाच्च। मन्मते च अनुमितिप्रतिबन्धकतायाश्च तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषयितात्वावच्छिन्नव्यापकताविरहेणातिप्रसङ्गानवकाशात्।

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकतया तस्य च ह्रदो वह्निमानित्याद्यनुमित्यविरोधितयाऽसम्भवः। जलवान् वह्निमानित्यादिस्थलीयदोषासंग्रहेण अविशेषितधर्मावच्छिन्नपक्षादिस्थलीयस्यापि किञ्चिद्विशिष्टतद्घटितस्य दोषस्यासंग्रहेण च पक्षतावच्छेदकांशे अन्याप्रकारकत्वादिनिवेशस्याशक्यत्वात् तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य ज्ञाने विशेषणत्वोपगमे सर्वमाकाशवदित्यादिस्थलीयबाधादौ तद्घटकाप्रसिद्धा अव्याप्तेः। यद्रूपावच्छिन्नस्य यस्य यस्य तादृशविशिष्टघटकता तद्रूपावच्छिन्नतत्तद्विषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वं ज्ञाने निवेश्यम्। जातित्वाद्यवच्छिन्नस्य ह्रदत्वादेर्न वह्न्यभाववद्ध्रदत्वावच्छिन्नात्मकदोषघटकतेति। जातित्वाद्यवच्छिन्नह्रदत्वादिविषयता तादृशविषयता भिन्नैव तच्छून्यत्वं च नोक्तज्ञानस्येति न दोष इत्यपि न सत्।

तथा सति ह्रदो जात्यभाववान् इत्यादिस्थलीयबाधादेरेव दुःसंग्रहत्वात् जातित्वादिना ह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनो जातिमान् जातिमान् इत्यादिज्ञानस्य जातित्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयताया निरुक्तविषयताभिन्नत्वविरहेण तादृशज्ञानस्य अनुमित्यप्रतिबन्धकस्य शून्यत्वात्तेनावारणात्। नैवम्। यतो यद्रूपावच्छिन्नविषयितात्वं

तादृशविशिष्ट-विषयकत्वसमानाधिकरणाभाव-प्रतियोगितावच्छे- दकं तद्रूपावच्छिन्नविषयिताशून्यत्वस्य ज्ञानविशेषणतया साम- ञ्जस्यात् अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशेषि- तक्रद्वत्वादिघटित-तत्तद्रूपावच्छिन्न-विषयितात्वावच्छिन्नाभावस्य दोषात्मकविशिष्टविषयितासमानाधिकरणत्वात् तज्ज्ञानस्य व्यावृत्तिरिति तु निष्कर्षः ।

विशिष्टस्य विशिष्टविषयकत्वस्यासत्त्वेऽपि वह्न्यभाववत्त्वादिना घटाद्यवगाहिनि भ्रमेऽसत्त्वेऽपि तथा च विशिष्टविषयकत्वेन प्रतिबन्धकता न सम्भवतीति भावः । भ्रमात् प्रतिबन्धेऽपि तादृ- शभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि न क्षतिः । नोक्तयुक्त्या पर्याप्तिनिवेशेऽसम्भवः तदनिवेशे पूर्वातिप्रसङ्गो वा । ननु विशि- ष्टदोषघटकीभूततदेकदेशविषयतायां स्वरूपसम्बन्धरूपावच्छेद- कत्वसत्त्वेऽपि यादृशविशिष्टविषयतासामान्यस्य तादृशावच्छेद- कत्वविवक्षया अतिप्रसङ्गवारणसम्भवात् तदेव कथं न विवक्षित- मिति ।

नच सामान्यपदस्य व्यापकत्वार्थकतया प्रतिबन्धकतावच्छे- दकतायां विशिष्टविषयितात्वव्यापकत्वं प्रवेश्यं तदपेक्षया प्रति- बन्धकतायां विशिष्टविषयिताव्यापकत्वनिवेशनमेवोचितमिति वाच्यम् । यतो वह्न्यभावविशिष्टह्रदादिनिरूपितविषयितायाः अनुमित्यप्रतिबन्धक-संशयाहार्याप्रामाण्यज्ञानास्कन्दितज्ञानसा- धारणतया नानुमितिप्रतिबन्धकतायां तद्व्यापकत्वमित्यनाहा- र्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्ट-यद्रूपावच्छिन्न- विषयिताव्यापकत्वं प्रतिबन्धकतायां भवता विवक्षणीयं तदपे- क्षया लाघवेन च स्वरूपसम्बन्धरूपावच्छेदकतायां बाधादिरूप- दोषविशिष्टविषयितात्वव्यापकत्वमेव विवक्षितुमुचितम् । तथा सति निश्चयत्वाद्यनिवेशात् समानाकारकज्ञानस्य विषयिताया

भेदस्याप्रामाणिकतया संशयादिज्ञानीयविषयताया अपि निश्च-यत्वादिविशिष्टीयतया प्रतिबन्धकतावच्छेदकताया अबाधात् प्रतिबन्धकतावच्छेदकतायां बाधादिरूपदोषनिरूपितविषयता-त्वव्यापकताया अक्षतत्वात्।

नच वह्न्यभाववान् ह्रदो वह्निमानित्याहार्य्यज्ञानीयवह्न्य-भावविशिष्टह्रदादिविषयतानानाहार्य्यज्ञानसाधारणी तादृशा-हार्य्यज्ञानसमानाकारकानाहार्य्यज्ञानाप्रसिद्धेः। ह्रदो वह्न्यभा-ववानित्यनाहार्य्यज्ञानीय-वह्न्यभावविशिष्ट-ह्रदादिविषयतायाश्च वह्न्यादिप्रकारतानिरूपिततादृशाहार्य्यज्ञानीयविशिष्टह्रदादिवि-षयताभिन्नत्वात्। तथा चानाहार्य्यज्ञानवृत्तित्वविशिष्टविषयताया एव प्रतिबन्धकतावच्छेदकतया न दर्शिताहार्य्यज्ञानीयविषयता-साधारणविशिष्टविषयतात्वव्यापकत्वमिति वाच्यम्। एवं सति अनाहार्य्यज्ञानीयविशिष्टविषयतात्वव्यापकताया एव विवक्षणी-यत्वात्। तावतापि संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्व-योरप्रवेशेन लाघवानपायात्। मैवम्। स्वरूपसम्बन्धरूपावच्छे-दकत्वप्रवेशे पाषाणमयत्वाद्यवच्छेदेन वह्न्यभाववत्तानिश्चयवि-शिष्टस्य पाषाणमयत्वविशिष्टस्य पश्चाद्देशांशस्य वह्न्यनुमिति-प्रतिबन्धकतया, तदवच्छेदकविषयताकपाषाणमयत्वविशिष्टप-श्चादावतिव्याप्तेः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे तादृशविशिष्टविषयतायाः पाषाणमयत्वाद्यवच्छेदेन वह्न्यभाव-वत्तानिश्चयाविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकता-तिरिक्तवृत्तित्वेनातिप्रसङ्गानवकाशात्।

न चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽपि जला-द्यवच्छेदेन वह्न्यभाववत्ताघटितस्य वह्न्यभाववज्जलादिमद्वृत्ति-जलादिविशिष्टस्य ह्रदादिरूपपक्षस्य जलवान् वह्न्यभाववान् इत्यादिज्ञानस्थितस्य जलवांश्च ह्रद इत्यादिज्ञानस्य तादृशज्ञान-

विशिष्टताद्दशज्ञानत्वेनैव प्रतिबन्धकतया ताद्दशप्रतिबन्धकता-शून्यज्ञानाविषयस्य सत्प्रतिपक्षाद्यनात्मकस्य वारणाय ज्ञान-वैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायामवश्यं निवेशनीय-तया मन्मतेऽपि तत्र नातिप्रसङ्ग इति वाच्यम्। ज्ञानवैशिष्ट्या-नवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापकसाध्या-भावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तेः साध्या-भावांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानत्वेन स्वतन्त्रसाध्याभा-वधर्मिकतद्व्यापकताग्रहविशिष्ट-तद्वत्ताज्ञानसाधारण्यानुरोधेना-वश्यकल्प्यप्रतिबन्धकतयैवोपपत्तेः। ताद्दशविशिष्टज्ञानस्य ज्ञान-वैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावादुक्तविशिष्टेऽतिप्र-सङ्गस्तु विवक्षणीयविशिष्टान्तराघटितत्वविशेषणेनैव वारणीयः।

नच ज्ञानद्वयसाधारणप्रतिबन्धकतायाः प्रत्येकज्ञानविषयवि-शिष्टविषयकत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकतावत् तथा च दर्शितविशिष्टघटकस्य प्रत्येकज्ञानविषयस्य न निरुक्तविशिष्टा-त्मकतेति निरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्टस्याक्षतमे-वेति वाच्यम्। एवमपि वक्ष्यमाणविशिष्टान्तराघटितत्वस्येव या-द्दशविशिष्टविषयकनिश्चयविशिष्टयाद्दशविशिष्टविषयकनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्ति ताद्दशविशिष्टद्वयाघटितत्वस्यापि निवेशनीयतया उक्तविशिष्टवारणसम्भवात्। न चैवमुक्तसत्प्रतिप-क्षाव्याप्तिस्तस्य प्रतिहेतुव्यापकताविशिष्टसाध्याभावप्रतिहेतु-विशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादिति वाच्यम्। सत्प्र-तिपक्ष-घटकताद्दशविशिष्टद्वयविषयता-बहिर्भूतनिरुक्तविशिष्टद्व-यविषयताशून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितार्थकत्वात्। यत्र सत्प्रतिपक्षाप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव साध्यादि-भेदेन लक्षणभेदात् भ्रमात्मकज्ञानीयविषयतासाधारणरूपेणैव वा प्रतिहेतुव्यापकताविशिष्टसाध्याभावादिविषयितोपादेया।

अथ दर्शितविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियते अपि तु हेतुतावच्छेदकाघटितसाध्याभावाभाववदवृत्तिमत्त्वात्मक-विशिष्टस्यैव व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्त्वस्यैव उक्तरीत्या संग्रहे तद्धर्मव्यापकसाध्याभावकालीनतद्धर्मविशिष्टपक्षादिव्यावृत्तिरपि अशक्या स्यादिति अविशेषेण व्यापकताघटितविशिष्टमात्रस्य अलक्ष्यताया एव युक्तत्वात्। तथा चोक्तप्रयासमपेक्ष्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमेवोचितमिति वाच्यम्। एवमपि प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्य मतभेदेनासाधारण्यविरोधरूपस्य विषयितायाः पक्षधर्मिकप्रकृतहेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकत्वात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवात्। दर्शितातिप्रसङ्गवारणाय च निरुक्तविशिष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात्।

न च पक्षवृत्तित्वविशेषितप्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपमेवासाधारण्यादिरूपं वाच्यम्। पक्षवृत्तित्वाघटितविशिष्टविषयिताया अप्रतिबन्धकज्ञानसाधारणतया प्रतिबन्धकतानवच्छेदकत्वात् तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतुसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतहेतुरूपनिरुक्तविशिष्टद्वयघटिततया निरुक्तविशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवतीति वाच्यम्। पक्षवृत्तित्वाघटितविशिष्टस्यैवासाधारण्यताया विरोधोऽपि फलतः प्रतिरोध एव तदन्यत्वेन वा विरोधिविशेषणीयमिति पङ्क्तिव्याख्यानावसरे सङ्कलनीयत्वात्। नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि व्यभिचारादिघटितपदार्थान्तरेष्वतिव्याप्तिः तद्विषयकत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह विशेषणीयश्चेति तादृशलक्षणमिति शेषः। तादृशविशिष्टेति अनु-

मितिप्रतिबन्धकतायां यद्रूपावच्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेत्यर्थः। व्यभिचारत्वाद्यवच्छिन्नस्य व्यभिचारत्वादिरूपताद्दशरूपावच्छिन्नघटितत्वादसम्भव इत्यतोऽन्तरेति। स्वावच्छिन्नाविषयकप्रतीति-विषयतावच्छेदकावच्छिन्नार्थकमतः शुद्धव्यभिचारादेर्मेयत्वविशिष्टव्यभिचाराद्यभिन्नत्वेऽपि न क्षतिः। तदघटितत्वञ्च तदविषयकप्रतीतिविषयकत्वं एवं चानुमितिप्रतिबन्धकतायां याद्दशरूपावच्छिन्नविषयकत्वमवच्छेदकं ताद्दशं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तदवच्छिन्नत्वं समुदितार्थः।

यद्रूपावच्छिन्ने लक्षणं सङ्गमनीयं तदेव स्वपदार्थः भवति हि व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूता ये बाधत्वादयस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसमन्वयः। मेयत्वविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयकतावच्छेदकत्वाभावान्न तदवच्छिन्नेऽतिव्याप्तिः। मेयत्वविशिष्टव्यभिचारादेरपि मेयत्वादिना व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयत्वात् तद्दोषः स्यादतस्ताद्दशरूपाश्रयधर्मिणां तदवच्छिन्नाविषयकप्रतीतिविषयत्वेनाविशिष्य स्वमेव ताद्दशविषयतावच्छेदकत्वेन विशेषितम्। मेयत्वविशिष्टव्यभिचारत्वाद्याश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छिन्नविषयकप्रतीतौ दुर्घटत्वात् तद्दोषतादवस्थ्यम्। अतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेशः। स्वावच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वस्य ताद्दशधर्मविशेषणत्वे व्यभिचारत्वादेरपि मेयत्वादिना व्यभिचाराद्यवच्छिन्नाविषयकप्रतीतिविषये व्यभिचारादौ वर्त्तमानत्वादसम्भव इत्यतस्ताद्दशविषयितावच्छेदकत्वेन धर्मो विशेषितः।

प्रमेयं गगनवत् वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्गगनाभाववत्प्रमेयत्वादि तदाश्रयाविषयकप्रतीत्यप्रसिद्ध्या व्यभिचारादौ तादृशप्रतीतिविषयत्वस्य दुरुपपादतयाऽव्याप्तिः अतस्तदवच्छिन्नाविषयकत्वनिवेशः। अत्र च तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छेदकधर्मे विशेषणतापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टान्तराविषयकत्वनिवेश एवोचितः। एवञ्च निष्कृष्टवक्ष्यमाणकल्पेऽपि यद्विषयकनिश्चयस्येत्यत्र निश्चय एव तन्निवेशं लाघवादित्यवधेयम्।

अथ धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधादेर्व्यभिचारादिघटिततया तत्राव्याप्तिः। नच यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वस्य विवक्षितत्वान्न दोषः व्यभिचारस्योक्तबाधविषयकत्वान्न्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकविषयताकत्वेऽपि तादृशप्रतिबन्धकतासामान्यान्तर्गतानुमितिप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेण तदघटितत्वस्याकिञ्चित्करत्वादिति वाच्यम्। व्यभिचारादौ व्यभिचारत्वादिरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकस्य तदच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याप्रसिद्ध्याऽसम्भवात् व्यभिचारत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तथाविधविषयितानिरूपकतावच्छेदकत्वात् तस्य व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्।

न च स्वावच्छिन्नविषयकत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकता-सामान्यावच्छेदक-विषयिता-निरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य

एवम्भूतं यत् स्वं प्रमेयत्वविशिष्टव्यभिचारत्वादि तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य विवक्षणीयतया न दोष इति वाच्यम्। तथा सति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधत्वाद्यवच्छिन्नघटकतावच्छेदकस्य धूमव्यभिचारिवह्निमत्त्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयिता-निरूपकतावच्छेदक-व्यभिचारत्वकत्वादव्याप्तेर्दुर्वारत्वात्। न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तद्रूपावच्छिन्नत्वमेव समुदितलक्षणार्थः। मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतायाः शुद्धव्यभिचारत्वाद्यवच्छिन्ननिरूपितविषयितायाः मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य च तस्मिन्नसत्त्वेन मेयत्वविशिष्टव्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात् व्यभिचारत्वादिविशिष्टानिरूपितत्वासम्भवात् व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदिकायाः कस्या अपि विषयताया व्यभिचारत्वादिविशिष्टानिरूपितत्वासम्भवात् तादृशविषयतायां यादृशधर्मविशिष्टानिरूपितत्वं घटत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तादृशत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतया व्यभिचारत्वादेः स्वपदेनोपादातुं शक्यत्वाच्च न कश्चिद्दोषः।

अथवा यद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्वं यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यं

तद्धर्मवत्त्वमेव समुदितार्थ इति वाच्यम्। बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नेऽतिप्रसङ्गात् तादृशधर्मावच्छिन्नविषयकत्वावच्छिन्नबाधज्ञानप्रतिबन्धकतायां केवलव्यभिचारविषयतायास्तादृशव्यभिचारज्ञानप्रतिबन्धकतायाश्च केवलबाधविषयितायां अनवच्छेदकत्वेन बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नविषयताया एव तथाविधप्रतिबन्धकतासामान्यावच्छेदकत्वं तस्याश्च तादृशधर्मविशिष्टनिरूपितत्वस्यावश्यकत्वात् प्रथमकल्पे स्वपदेन चरमकल्पे च यत्पदेन तस्योपादानसम्भवात्।

अथ वह्न्यभावादिधर्मितावच्छेदकवह्न्यादिप्रकारकबुद्धेरिव धूमव्यभिचारविशिष्टवह्न्यादिधर्मितावच्छेदकस्य धूमव्याप्यतया वह्न्यादिप्रकारकग्रहस्यानाहार्य्यस्यासम्भवेन तादृशपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालम्बनानुमितेरप्रसिद्धया तादृशानुमितिप्रतिबन्धकताघटितयथाश्रुतलक्षणस्य तद्रूपावच्छिन्नपक्षकवह्न्यादिहेतुकदोषाव्याप्तिः स्वयमेव वक्ष्यते इति तद्वारणाय आयासो वृथेति चेत् भवतु तावदेवं तथापि विशेषगुणाभाववान् घटो गुणसामान्याभाववान् इत्यादौ दर्शितसमूहालम्बनानुमितिप्रसिद्धया विशेषगुणवद्घटादिरूपाश्रयासिद्धे गुणवद्घटादिरूपबाधघटितायाः संग्रह आवश्यकः। यदि च तत्र घटत्वाद्यवच्छेदेन गुणवत्त्वमेव बाध आश्रयासिद्धिश्च तत्र घटत्वसामान्याधिकरण्येन घटत्वावच्छेदेन वा विशेषगुणवत्त्वं तस्याश्च गुणत्वरूपसामान्यधर्मावच्छिन्ने घटत्वव्यापकताघटितोक्तबाधस्य न प्रवेशः। विशेषगुणत्वेन घटत्वव्यापकतायास्तत्र प्रवेशेऽपि सामान्यरूपेण व्यापकतायास्तदनन्तर्भावादिति न तादृशाश्रयासिद्धसंग्रह इत्युच्यते तदापि विशेषगुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ द्वितीयादिक्षणावच्छिन्ने घटे विशेषगुणवत्त्वरूपाश्रयासिद्धौ तदवच्छिन्ने घटे गुणवत्त्वरूपबाधप्रवेश-

स्यावश्यकत्वात्, यथाश्रुतलक्षणे च तत्संग्रहस्यावश्यकतया उक्तविशेषणदानानुपपत्तिः।

वस्तुतस्तु अत्र वदन्तीत्यादिनिष्कृष्टकल्पेऽपि प्रमेयत्वविशिष्ट-व्यभिचारादिवारणाय विशिष्टान्तराघटितत्वस्य निवेशनीयतया तन्मते दर्शितबाधाद्यसंग्रहो दोष एव। एतेन स्वावच्छिन्ननि-रूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविशिष्ट-निरूपित-विषयितात्व-व्यापक-स्वावच्छिन्न-निरूप्यताक-धर्मवत्त्वं समुदितलक्षणार्थः। मेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयिता-कशुद्धव्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूप्यत्वाव्या-प्यत्वात् उक्तस्थले विशेषगुणविशिष्टघटादिरूपाश्रयासिद्ध्या-दिविषयकत्वावच्छिन्न-विशिष्ट-पक्षग्रहादि-निरूपित-यत्किञ्चित्प्र-तिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य तादृशाश्रयासिद्ध्यादिनिरूपितत्वव्याप्यत्वात् तत्र लक्षणसम-न्वयः।

प्रतिबन्धकतायां यावत्त्वानिवेशान्नोक्तरीत्या बाधादिविशिष्ट-व्यभिचारादावतिप्रसङ्गः। स्वावच्छिन्नानिरूपितविशिष्टविषयि-त्वानवच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयि-ताको यो धर्मस्तद्वत्त्वं वा समुदितलक्षणार्थः। प्रमेयत्वविशिष्ट-व्यभिचारत्वादिकं नैतादृशं स्वं तदवच्छिन्नानिरूपितशुद्धव्यभि-चारत्वाद्यवच्छिन्नविषयितावच्छिन्नायामेव प्रतिबन्धकतायां तद-वच्छिन्नविषयिताया अवच्छेदकत्वात् उक्तस्थले तादृशविशिष्ट-बाधविषयकत्वस्य तदनिरूपितव्यभिचारविषयित्वानवच्छिन्नानु-मितिप्रतिबन्धकतावच्छेदकत्वाल्लक्षणसमन्वय इति परास्तम्। यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त इत्यादिनिष्कृष्टक-ल्पेऽनुमितिप्रतिबन्धकताया अघटकत्वात् प्रतिबन्धकतायां

विशिष्टान्तरविषयकत्वानवच्छिन्नत्वविशेषणदानस्यासम्भवेन यत्-पदार्थस्य तादृशपदार्थान्तराघटितत्वेन विवक्षणीयतया उक्ता-बाधापत्तेरशक्यपरिहारत्वात्। अत्र केचित् स्वसजातीयविशि-ष्टान्तराघटितत्वमेव यत्पदार्थे विशेषणं देयं साजात्यञ्च हेत्वाभा-सविभाजकरूपेण तच्च रूपं बाधत्वव्यभिचारत्वादि तेन च रूपेण व्यभिचारादेर्न बाधादिसाजात्यम् इति व्यभिचारघटितबाधादौ नाव्याप्तिः।

न चैवं यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तोभयाभाव-स्तत्त्वमित्यत्र विरोधिविषयताप्रयुक्तत्वदलस्य वैयर्थ्यं घटादेस्ता-दृशरूपेण सजातीयत्वाप्रसिद्धेरेव नातिप्रसङ्गादिति वाच्यम्। स्वसजातीयविशिष्टान्तरघटितं यत् स्वं तदविषयकप्रतीति-विषयत्वस्य विवक्षणेन अनुयोगिनि स्वत्वानन्तर्भावेण पदार्था-न्तरेऽतिप्रसङ्गवारकतया तद्दलसार्थक्यात्। न च व्यभिचार-विशिष्टमेयत्वादेर्हेत्वाभासत्वविरहाद्धेत्वाभासविभाजकरूपेण स्व-सजातीयाप्रसिद्धया तस्य स्वपदेनोपादातुमशक्यतया मेयत्वविशि-ष्टव्यभिचारत्वादिकमेव स्वपदेनोपादेयम् तस्य शुद्धव्यभिचाराद्य-भिन्नतया व्यभिचारत्वादिरूपहेत्वाभासविभाजकरूपेण तत्स-जातीयप्रसिद्धेरिति तदविषयकप्रतीतिविषयत्वस्य व्यभिचार-विशिष्टमेयत्वादौ सत्त्वात्तत्रातिप्रसङ्ग इति वाच्यम्। विशिष्टा-न्तराघटितत्वेनाघटितस्य विशिष्टसाध्यसाधनग्रहाविरोधिज्ञान-निष्ठविषयितासम्बन्धेन व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्ति-त्वादिरूपस्य व्यभिचारादिविभाजकस्यात्र निवेशात्। तादृश-रूपस्य च व्यभिचारविशिष्टमेयत्वादिसाधारणत्वादित्याहुस्तन्न। व्यभिचारादिघटितबाधादेरपि विशिष्टान्तराघटितत्वाघटित-व्यभिचारत्वादेः सत्त्वेन तद्घटकव्यभिचारादेर्व्यभिचारत्वादिना तत्सजातीयतया तत्संग्रहानुपपत्तेः।

न च स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विवक्षणीयं तथा च बाधादिघटकव्यभिचारादौ बाधत्वाद्यसत्त्वात् तत्र तादृशबाधादिसजातीयत्वमतस्तत्संग्रहसम्भव इति वाच्यम् । एवं सति बाधविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेण सजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्रसिद्धावपि तद्घटितत्वासत्त्वेनातिव्याप्तेस्तस्माद्व्यभिचारादिघटितबाधादेः संग्रहप्रकारोऽग्रे प्रदर्शनीय एवादरणीयः । मेयत्वविशिष्टव्यभिचारादौ स्ववृत्तिव्यभिचारत्वाद्यवच्छिन्नेनातिप्रसङ्गः न तत्र दोषताप्रसङ्गः तत्र प्रमेयत्वविशिष्टव्यभिचारो दोष इत्यादिव्यवहाराभावान्नेष्टापत्तिः सम्भवति । न च विशिष्टव्यभिचारादेः शुद्धव्यभिचारत्वादिना दोषत्वस्याच्चततया उक्तविशेषणदानेऽपि तादृशव्यवहारापत्तिर्दुर्वारैवेति तत्रेष्टापत्तौ च व्यर्थविशेषणमिति वाच्यम् । दोषादिपदस्य निरुक्तविशेषणावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदक-स्वावच्छिन्ननिरूपित-विषयिताकत्वेनान्वयितावच्छेदकधर्मबोधकतया व्युत्पन्नतया प्रकृते च प्रमेयत्वादिविशिष्ट-व्यभिचारत्वादिरूपस्यान्वयितावच्छेदकस्योक्तविशेषणविरहेणातिप्रसङ्गभङ्गादिति हृदयम् । नन्वाश्रयासिद्ध्यादिस्थले पक्षतावच्छेदकाभाववत्पक्षादिकमेव दोषः तस्यैव हेतुनिष्ठतया हेतौ दुष्टत्वव्यवहारनिर्वाहकत्वात् तादृशधर्मस्य च तादृशाभाववत् पक्षादिरूपतादृशविशिष्टान्तरघटिततयाऽव्याप्तिरित्यत आह एवञ्चेति तादृशविशेषणदाने चेत्यर्थः । पक्षतावच्छेदकादिति आदिपदात्साध्यतावच्छेदकादिपरिग्रहः । पर्वतादिधर्मिककाञ्चनमयत्वादिविशिष्टबुद्धौ पर्वतः काञ्चनमयत्वाभाववानित्यादिधर्मिविशेष्यकनिश्चयस्येव पर्वते काञ्चनमयत्वं नास्तीत्यादिधर्मिविशेषणकनिश्चयस्यापि विरोधित्वमानुभविकमतस्तद्विषयस्यापि दोषत्वमाह पक्षनिष्ठेति आधेयतासम्बन्धेन

पक्षविशिष्टेत्यर्थः। वाकारः समुच्चये। साधनवद्वृत्तिसाध्याभाव इति समानधर्मिकसाध्याभाववद्वृत्तित्वादिप्रकारकज्ञानं अनुमितिजनकव्याप्तिधी प्रतिबन्धकं साधनवति साध्याभाव इति ज्ञानेऽपि साधने साध्याभाववद्वृत्तित्वं तुल्यवित्तिवेद्यतया नियतो भासत इत्यभिप्रायेण साधनवति साध्याभाव इति तादृशज्ञानस्यासमानविशेष्यकस्य मणिमन्त्रादिन्यायेन स्वातन्त्र्येण प्रतिबन्धकत्वमिति प्राचीनमताभिप्रायेणेदं तादृशज्ञाने नियमतस्तदभानेऽपि मणिमन्त्रादिन्यायेन तस्य व्याप्तिज्ञानप्रतिबन्धकत्वमित्यभिप्रायेणेदं इत्यपि कश्चित्। दोष इति। न हि पक्षतावच्छेदकाभाववत्पक्षकत्वादिरिति शेषः। तथा चालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः।

ननु पक्षतावच्छेदकाभाववत्पक्षादीनां हेत्वद्वृत्तित्वात्कथं हेतौ दुष्टत्वव्यवहार इत्यत आह येन केनापीति। एकज्ञानविषयत्वादिना चेत्यर्थः। तद्वान् तदवच्छिन्नो दुष्टपदप्रतिपाद्यः तथा च हेतोस्तादृशदोषानधिकरणत्वेऽपि न क्षतिः। दुष्ट इत्यादौ सामान्यतः सम्बन्धित्वस्यैव निष्ठार्थत्वात् न चैवं एकज्ञानविषयत्वादिना वह्न्यभाववद्ध्रदादिरूपदोषस्य धूमादौ सत्त्वेन पर्वतादौ च वह्न्यादिसाधने तस्य दुष्टत्वव्यवहारापत्तिरिति वाच्यं यतः तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्याहारस्थले दुष्टपदस्य तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयिताकधर्मावच्छिन्नसम्बन्धिनो बोधकत्व व्युत्पत्त्या पूर्ववद्वारणेऽपि पूर्ववदेव वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारो निरुक्तदोषमात्रस्य दुष्टव्यवहारविषयतावच्छेदकत्वे दुर्वार इति प्रकृतहेतुतावच्छेदकविशिष्टसम्बन्धो निष्ठार्थतावच्छेदको वाच्यः।

एतदभिप्रायेव प्रकृतहेतुरित्युक्तं ह्रदे वह्निः साधने धूमो दुष्ट

इत्यत्र ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयिताकधर्मावच्छिन्नसम्बन्धी धूम इत्यन्वय बोधः। तत्र प्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मविशिष्ट एव दुषधातोरर्थः। साधनपदं लक्षणया धूमत्वावच्छिन्नहेतुकानुमितिपरं तत्र ह्रद इति सप्तम्यन्तार्थह्रदत्वावच्छिन्नपक्षकत्वस्य वह्नेरिति षष्ठ्यन्तार्थस्य वह्नित्वावच्छिन्नसाध्यकत्वस्य चान्वयः तादृशानुमित्यन्वितसप्तम्यन्तार्थनिरूपितत्वस्य दुषधात्वर्थैकदेशे प्रतिबन्धकत्वेऽन्वयः।

एवञ्च पर्वते वह्नेः साधने धूमो दुष्ट इत्यत्र पर्वतत्वावच्छिन्न-पक्षक-वह्नित्वावच्छिन्न-साध्यक-धूमत्वावच्छिन्न-हेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयताकधर्मविशिष्ट-सम्बन्धी धूम इत्येव प्रतीयते तादृशविशिष्टधर्मस्याप्रसिद्ध एवेति न तथा व्यवहारः। पक्षविशेषादिकमनन्तर्भाव्य धूमो दुष्ट इत्यादिव्यवहारस्तु दृश्यत एवेति दिक्। साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारतया प्रसिद्धिर्न तु तद्विशिष्टसाधनादेरतो न तस्य दोषत्वमिति कश्चिदाह व्याचष्टेऽपि लक्षणमन्यथैवान्यथातिप्रसङ्गात् तादृशव्याख्यामुपन्यस्यति यादृशेति। यद्रूपावच्छिन्नेत्यर्थकं ज्ञानं ज्ञानत्वावच्छिन्नेत्यर्थकं तस्य धर्मिणः तद्धर्मावच्छिन्नस्य तेन सम्बन्धेनेति शेषः। तादृशधर्मवत्त्वं तद्रूपावच्छिन्नवत्त्वं साधनादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य व्याप्त्यादिज्ञानप्रतिबन्धकत्वेऽपि साध्याभाववद्वृत्तित्वादेराधेयतासम्बन्धेन साधनीयत्वादिकं न दोषः साधनादेः साध्याभाववद्वृत्तित्वादिधर्मिताविरहात्। अत्रापि अवच्छेदकत्वं पूर्ववत् न तु स्वरूपसम्बन्धविशेषः पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभावत्वावच्छिन्नवत्त्वादावतिप्रसङ्गात् तदवच्छि-

धर्मिकतद्रूपावच्छिन्नवत्ताज्ञानत्वस्यापि प्रतिबन्धकतावच्छेदककोटौ प्रविष्टत्वात्। अवच्छेदकतापर्य्याप्तिविवक्षणे च ह्रदत्वावच्छिन्ननिष्ठवह्न्यभावत्वावच्छिन्नवत्त्वेऽव्याप्तिः। यतो वह्नित्वादिना घटाद्यवगाहिनोऽपि ह्रदो न वह्निमानित्यादिनिश्चयस्य ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतया ह्रदत्वावच्छिन्नविशेष्यकवास्तववह्न्यभावत्वावच्छिन्नप्रकारकनिश्चयत्वेन न प्रतिबन्धकता अपि तु ह्रदविशेष्यकवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैव अतस्तादृशमेव रूपं प्रति प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणं नतु ह्रदत्वावच्छिन्नधर्मिक-वह्न्यभावत्वाद्यवच्छिन्न-प्रकारकनिश्चयत्वमिति। यद्रूपपदेन वह्न्यभावत्वाद्युपादानं न सम्भवतीति पर्वतो वह्न्यभाववानित्यादौ पर्वतत्वावच्छिन्ननिष्ठवह्नित्वाद्यवच्छिन्नवत्त्वरूपबाधादावच्छेदकतापर्य्याप्तिघटितलक्षणस्यापि सत्त्वान्नासम्भवोऽभिहितः। पर्वतत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नप्रकारकनिश्चयत्वे पर्वतो वह्न्यभाववान् इत्याद्यनुमितिप्रतिबन्धकतावच्छेदकतापर्य्याप्तेः। पर्वतो वह्न्यभाववान् इत्यादौ पर्वतत्वाद्यवच्छिन्ने वह्नित्वाद्यवच्छिन्नवत्त्वरूपबाधादेरसंग्रहभयेन यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकता तद्रूपविशिष्टे तद्रूपावच्छिन्नविशेषिततद्रूपावच्छिन्नवत्त्वं दोष इति विवक्षाया असम्भवात्।

अत्र साधननिष्ठसाध्याभाववद्वृत्तित्वादेरिव साध्याभाववद्वृत्तिसाधनादेरपि दोषत्वे क्षतिविरहात् एतावानायासोऽनर्थक इत्यस्वरसः कश्चिदित्युक्त्या सूचितः। यथाव्याख्यातलक्षणस्य यथाश्रुतार्थे निर्वह्निः पर्वतो वह्निमानित्यादौ प्रकृतपक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेरेवाप्रसिद्ध्याऽव्याप्तिः दर्शयिष्यते। तत्र विशिष्यपक्ष-

तावच्छेदकाद्यप्रवेशेनाप्रसिद्धिरतस्तन्निवेशनप्रयोजनमाह अथेति। पर्वतादेः काञ्चनमयत्वविरह इत्यादौ सर्वत्र न दोष इति सम्बध्यते। तथाच पक्षतावच्छेदकाप्रवेशे पूर्वोक्तयुक्त्या असम्भवः अतः यत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्यकानुमितिसामान्यप्रतिबन्धकत्वमेव निवेश्यमिति पर्वतो वह्निमानित्यादौ पर्वतनिष्ठकाञ्चनमयत्वाभावादावतिप्रसङ्गस्तस्यापि काञ्चनमयत्वादिसहितपर्वतत्वादिरूपयत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबन्धकज्ञानविषयत्वादिति भावः।

आदिपदञ्च वस्त्वन्तरसंग्राहकं प्रकृतानुमित्यविषयपदार्थाभावेऽतिव्याप्तिं सूचयित्वा तद्विषयसाध्याभावे तां सूचयति ह्रदस्येति। ह्रदनिष्ठवह्निशून्यत्वं धूमशून्यत्वं चेत्यर्थः। ह्रदनिष्ठसाध्याभावेऽतिव्याप्तिसूचनञ्च प्रकृतपक्षतावच्छेदकावच्छिन्नप्रकृतपक्षकत्वरूपसमुदायदलस्यैवानिवेशे बोध्यम्। महानसीयेति महानसीयवह्न्यभावो महानसीयधूमाभावश्चेत्यर्थः। अत्रातिव्याप्तिसूचनञ्च प्रकृतसाध्यतावच्छेदक-प्रकृतहेतुतावच्छेदकयोरप्रवेशे बोध्यम्। इदमुपलक्षणं साध्यहेत्वोरनिवेशेऽपि जलत्वाभावादावतिव्याप्तिर्बोध्या। प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे पक्षधर्मताज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयित्वा व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयति मेयत्वस्येति। वह्निव्यभिचार इत्यनेनान्वयः। अत्रातिव्याप्तिस्तादृशसमुदायदलस्यैवानिवेशे बोध्या। प्रकृतहेतुकत्वनिवेशेऽपि एतद्दोषस्य अशक्यवारणतया हेतुतावच्छेदकनिवेशाय आह केवलधूमस्येति। वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्त्तकविशेषणानवच्छिन्नस्येत्यर्थः। साध्यतावच्छेदकानिवेशे पूर्वं साध्यवत्ताज्ञानविरोधिन्यतिव्याप्तिः दर्शिता इदानीं व्यक्तिज्ञानविरोधिन्यतिव्याप्तिं दर्शयति विशिष्टधूमस्य वा पर्वतीयवह्निव्यभिचार इति।

दोषलक्षण इव दुष्टलक्षणेऽपि पक्षतावच्छेदकादिनिवेशस्य आवश्यकतां दर्शयति न वा तत्सम्बन्धेनेति। तत्र पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नसाधने तस्य विशिष्टधूमत्वावच्छिन्नस्य पक्षादौ पक्षतावच्छेदकादेर्यादृशसम्बन्धेन विशेषणत्वं यत्राभिहितं तत्र तत्सम्बन्धेन तदवच्छिन्नत्वं निवेश्यमिति सूचयितुं तत्पक्षकेत्युक्तम्। पक्षतावच्छेदकादिनिवेशे पक्षादिनिवेशस्याप्रयोजकत्वादिति वाच्यमिति। तद्रूपावच्छिन्नपक्षसाध्यहेतुकदोषलक्षणे निवेशनीयम्। तथा चेति निर्वह्निः पर्वतो वह्निमानित्यत्र च पक्षतावच्छेदकनिर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवति स्वविरोधिधर्मधर्मितावच्छेदकस्वप्रकारकानाहार्यज्ञानस्यानभ्युपगमात् पर्वतः पर्वतावृत्तिवह्निमानित्यत्र पर्वतावृत्तित्वरूपसाध्यतावच्छेदकावच्छिन्न -प्रकारकत्वमनुमितेर्न सम्भवति स्वस्मिन् स्वावृत्तित्वावच्छिन्नप्रकारकानाहार्यज्ञानस्याननुभाविकत्वात्। एवं पर्वतो वह्निमान् वह्निव्यभिचारिण इत्यत्र वह्निव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्ने वह्निव्याप्यत्ववैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवति पूर्वोक्तयुक्तेः पर्वतो वह्निमान् पर्वतावृत्तेरित्यत्र पर्वते पर्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं नानुमितेः सम्भवति उक्तयुक्तेरिति। यथा विवक्षितानुमित्यप्रसिद्धिप्रयोजकभेदेन नानास्थलेऽव्याप्तिकथनं न कोऽपि हेत्वाभासः स्यादिति। तथा चापार्थकत्वरूपनिग्रहस्थानत्वेन तथा प्रयोक्तुर्निग्रह्यत्वोपपत्तावपि निर्वह्नित्वेन पर्वते वह्नेः साधने धूमो दुष्ट इत्यादिव्यवहारो दुरुपपाद इति भावः। तादृशानुमितेः तथाविधविवक्षितानुमितेरप्रसिद्धत्वादिति आहार्यपरोक्षज्ञानानुगमादिति भावः। यद्विषयकनिश्चयस्येति यद्रूपावच्छिन्नविषयकनिश्चयस्येत्यर्थः। उत्तरपदस्योत्तरकालीनार्थकतया तदुत्तरमिति धातूपस्थाप्यानुमितिरूपक्रियाविशे-

प्रथमतो द्वितीया । अग्रिमक्षणे च तादृशज्ञानरूपक्रियाविशेष-णतो ज्ञानपदमपि सार्थकं तत्पदं च तादृशनिश्चयपरामर्शकम् कालाध्वनोरत्यन्तसंयोग इत्यनेन अधिकरणे द्वितीया । उत्तर-पदस्योत्तरकालपरत्वादिति तु न युक्तं व्यापकार्थकस्यात्यन्त-संयोगस्य प्रकृतेऽविवक्षितत्वात् । अनुमितौ अनुमितिसामान्ये द्वयोर्व्यतिरेक इति सम्बन्धः तत्त्वं तद्रूपावच्छिन्नत्वम् ।

अत्र च तज्ज्ञानानन्तरज्ञाननिष्ठतादृशोभयाभावे तज्ज्ञा-नीयाया एव विरोधिविषयितायाः प्रयोजकत्वाद्विरोधिविषयि-तायां तादृशनिश्चयीयत्वकथनं स्वरूपकीर्त्तनमात्रं न तु लक्षण-घटकं तथा च यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानु-मितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं तादृश-रूपावच्छिन्नत्वं दोषत्वमिति समुदितार्थः । वह्न्यभावविशिष्ट-ह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरं ह्रदो वह्निमान् वह्निव्या-प्यधूमवांश्चेत्याकारकानुमितेः कदाप्यनुमित्यनुत्पत्त्या घटाद्यनु-मितय एव तादृशनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गता-स्तासु च ह्रदत्वादिविशिष्टे वह्नित्वाद्यवच्छिन्नवैशिष्ट्यावगा-हित्वञ्च वह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टधूमत्वाद्यवच्छि-न्नवैशिष्ट्यावगाहित्वञ्च तदुभयाभाववत्त्वमक्षतमेव । तत्र तादृश-निश्चयीयविरोधिविषयिताप्रयुक्तत्वमपि स्वनिष्ठप्रतिबन्धकताव-च्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदक-धर्माभावप्रयोजकत्वात् ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्न-वह्नित्वविशिष्ट-प्रकारताघटितधर्मावच्छिन्न-प्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकीभूताया ह्रदत्वावच्छिन्नविशेष्यकत्वाव-च्छिन्नवह्नित्वावच्छिन्नाभावीयप्रकारितायास्तादृशवह्नित्वादिवि-शिष्टप्रकारकत्वघटितोभयाभावप्रयोजकत्वात् । न च तादृश-विशिष्टप्रकारताकत्वमात्रं न विपरीतनिश्चयप्रतिबध्यतावच्छेद-

कामपि तु तद्विशेषितानाहार्यज्ञानत्वं तत्कथं तत्प्रकारकत्वाभावस्य तथाविधविरोधिविषयिताप्रयुक्तत्वमिति वाच्यम्। विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्वात् अनाहार्यज्ञानत्वाश्रयानुमित्यादिनिष्ठतादृशविशिष्टप्रकारकत्वाभावस्य विरोधिविषयिताप्रयुक्तत्वाच्चेतेरिति। ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावादिविशिष्टह्रदत्वाद्यवच्छिन्ने लक्षणसमन्वयः।

निर्वह्निः पर्वतो वह्निमानित्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत्पर्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्र प्रसिद्धपक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्न-साध्यतावच्छेदक-विशिष्ट-प्रकारकत्वघटितोभयाभाववत्त्वमक्षतमेवेति लक्षणसमन्वयः। न चाहार्यज्ञानमात्रे प्रसिद्धस्य निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानत्वस्य विरोधिविषयकज्ञानप्रतिबध्यतानवच्छेदकतया तादृशधर्मावच्छिन्ने वह्न्यादिप्रकारकत्वस्याभावे विरोधिविषयिताप्रयुक्तत्वमप्रामाणिकमिति वाच्यम्। तादृशज्ञानत्वस्य प्रतिबध्यतानवच्छेदकत्वेऽपि तद्व्यापकस्य पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकज्ञानत्वस्य वह्निविशिष्टपर्वतविषयकज्ञानप्रतिबध्यतावच्छेदकतया व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकतया तादृशविशिष्टविशेष्यकत्वावच्छिन्नवह्न्यादिप्रकारकत्वाभावस्य तादृशदोषविषयिताप्रयुक्तत्वस्यावश्यकत्वात्। न च विरोधिज्ञानासत्त्वेऽपि निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्यानाहार्यस्यानुत्पत्त्या इच्छादिघटिततादृशाहार्यज्ञानसामग्र्यभावस्यैव निर्वह्नित्वादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं न तु विरोधिविषयकत्वस्य क्वचिदप्यक्लृप्तत्वादिति वाच्यम्। अभावाधिकरणतायामेव विरोधिविषयिता-

प्रयुक्तत्वस्य निवेशतया अभावाधिकरणतायाश्चाभावाभेदेऽप्यधिकरणभेदेन भिन्नतया विरोधिज्ञानानन्तरोत्पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण पूर्वज्ञानीयविरोधिविषयिताया अपि प्रयोजकत्वात् । यद्विषयितप्रयुक्तस्तादृशोभयाभावस्तत्त्वमिति एतावन्मात्रे कृते ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभावादिविशिष्टह्रदादिविषयिताया इव तदन्तःपातिवह्न्यभावत्वादिविशिष्टविषयिताया अपि प्रतिबन्धकतावच्छेदककोटौ प्रविष्टतया प्रतिबध्यतावच्छेदकस्य ह्रदत्वादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वस्य विरहप्रयोजकतया बाधाद्येकदेशे वह्न्यभावत्वादिरूपविशिष्टेऽतिव्याप्तिरिति । यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिता प्रयुक्तोभयाभाववत्त्वं निवेशितम् । न च यादृशविशिष्ट-विषयिता-सामान्य-प्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येव सम्यक् विशिष्टह्रदत्वादिविषयितासामान्यान्तर्गतायां ह्रद इत्यादिज्ञानीय-विषयितायामुभयाभाव-प्रयोजकत्वासम्भवादतिव्याप्तेरनवकाशादिति वाच्यम् ।

पाषाणमयो न वह्निमानित्यादिज्ञानविशिष्टस्य पर्वतः पाषाणमय इत्यादिज्ञानस्य पर्वतो वह्निमानित्यादिज्ञानप्रतिबन्धकतया ज्ञानभेदेन विषयिताया भेदाभावात्पाषाणमयत्व-विशिष्टपर्वतादिविषयिता सामान्यस्यैवोभयाभावप्रयोजकत्वात् पाषाणमयत्वादि-विशिष्ट-पर्वतादावतिव्याप्तेर्दुर्वारत्वात् ह्रदो वह्न्यभाववानित्यादि-ह्रदादिविषयक निश्चयोत्तरोत्पन्न-घटाद्यनुमितौ विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वात् केवलह्रदादावतिव्याप्तिरतः सामान्यपदं पूरितम् । तथा सति ह्रदादिनिश्चयानन्तरोत्पन्नानुमितिसामान्यान्तर्गतायां ह्रद इत्यादिनिश्चयानन्तरजात ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याद्यनुमितौ विरो-

धिविषयितात्रयुक्ततादृशोभयाभावसत्त्वान्नातिव्याप्तिः। द्रव्यत्वादिना वह्न्यभाववद्ध्रदादिविषयकनिश्चयानन्तरमप्युक्तसमूहालम्बनानुमित्युत्पत्त्या तादृशविशिष्टस्यापि दोषत्वानुपपत्तिरतो यत्पदं यद्धर्मावच्छिन्नपरतयोपवर्णितम्। उपदर्शित वह्न्यभावविशिष्टह्रदे विषयकस्य ह्रदो वह्निमान्न वेति ज्ञानस्यानन्तरं तादृशसमूहालम्बनानुमित्युत्पत्त्या तद्दोषतादवस्थ्यमतो निश्चय इति अनाहार्यप्रामाण्यज्ञानानास्कन्दितवसंशयान्यज्ञानपरं तेनाहार्यप्रामाण्यज्ञानास्कन्दितस्य च दोषविषयकनिश्चयस्यानन्तरं तादृशानुमित्युत्पत्तावपि न क्षतिः। दोषविषयकनिश्चयनाशे सति तादृशानुमितेरुत्पत्त्या तद्दोषापत्तिरतोऽव्यवधाननिवेशः। एवं दोषविषयकलौकिकनिश्चयाव्यवहितपूर्वमनुमित्युत्पत्त्यापि तद्दोषोऽत उत्तरेति। तत्सामानाधिकरण्यमप्यनुमितौ निवेश्यमत एकस्य बाधनिश्चयानन्तरमन्यस्यानुमित्युत्पत्तावपि न क्षतिः। बाधादिनिश्चयानन्तरं पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यादिप्रकारकस्याहार्यस्य लौकिकस्य च प्रत्यक्षस्योत्पत्त्या तादृशज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः। अत्र यत्पक्षकयत्साध्यकयद्धेतुकयादृशदोषविषयकनिश्चयानन्तरं कस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्रसिद्ध्याऽव्याप्तिरतोऽनुमिति स्थलेऽनाहार्यदोषविशेषाजन्यज्ञानं निवेश्य कल्पान्तरमाह नाहार्य्येति। तथा च तादृशानुमित्यप्रसिद्धिर्यत्र तत्र तथाविधमानसोपनीतभानादिकमादायैव लक्षणं सङ्गमनीयमिति भावः।

बाधादिनिश्चयानन्तरमाहार्य्यसाध्यादि प्रकारकप्रत्यक्षोत्पत्त्याऽसम्भवोऽव्याप्तिर्वात्यतोऽनाहार्येति। शङ्खो न पीत इत्यादिनिश्चयानन्तरं शङ्खादौ पीतत्वादिप्रकारकज्ञानस्य दोषविशेषजन्य चाक्षुषादेरुत्पत्त्या शङ्खः पीतः शङ्खत्वादित्यादिस्थलीय-

बाधादावव्याप्तिरतो मानसमिति पदं दोषविशेषाजन्यज्ञानपरं तेन नाहं गौर इत्यादिनिश्चयानन्तरं मिथ्याज्ञानजन्यवासनारूपदोषविशेष-जन्यस्यात्मविशेष्यक-गौरत्व-प्रकारक-मानसस्योत्पत्तावपि अहं गौर आत्मत्वादित्यादिस्थलीयबाधादौ नाव्याप्तिः। एतेन यादृशपक्षसाध्यहेतुकस्थले यद्दोषविषयकनिश्चयानन्तरं विरोधिसामग्र्यादिवशेन मानसज्ञानं कदाचिदपि न जातं तत्राव्याप्तिरित्यपि निरस्तम्। तत्राप्यनुमिति शाब्दबोधादिकमादाय लक्षणसमन्वयसम्भवात्। पक्षतावच्छेदकेत्यादिदलद्वयनिवेशव्यावृत्तिः पूर्वरीत्या बोध्या। विरोधिविषयिताप्रयुक्तत्वनिवेशप्रयोजनं च स्वयमेवाग्रे वक्ष्यति यत्र विषयविशेषे समूहालम्बनज्ञानं न जातं तत्र पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्व-विशिष्ट-साध्यव्याप्तिविशिष्ट-वैशिष्ट्यावगाहित्वाभाव-रूपविशिष्टाभावाप्रसिद्ध्याऽव्याप्तिरतो विशिष्टाभावनिवेशः। तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयिताव्यापकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यस्यैव सम्यक्त्वेऽपि तथा सन्निवेशेन वैयर्थ्यम्। मेयत्वविशिष्टव्यभिचारादिवारणाय यथाश्रुतविशिष्टान्तराघटितत्वनिवेशे उपदर्शित व्यभिचारघटित बाधाद्यव्याप्तिरिति विशिष्टान्तरविषयित्वाप्रयोज्य स्वविषयताप्रयोज्य तादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपं तादृशविशेषणं निवेश्यं मेयत्वविशिष्टव्यभिचारादिप्रयोज्याया उक्तोभयाभावप्रयोजकव्याप्त्याद्यवगाहित्वाभाववत्तायाः शुद्धव्यभिचारादिविषयताप्रयोज्यत्वनियमेन मेयत्वविशिष्टव्यभिचारादौ न विशिष्टान्तरविषयत्वाप्रयोज्य स्वविषयताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वमिति नातिप्रसङ्गः उपदर्शितव्यभिचारादिघटितबाधादिविषयताप्रयोज्यायाः पक्षे साध्याद्यवगाहित्वाभावाधिकरणतायास्तद्घटक-व्यभिचारादि-विषयित्वाप्र-

योज्यतया तत्संग्रहः। न च विशिष्टपक्षे विशिष्टसाध्यवत्त्वग्रह-प्रतिबन्धकतावच्छेदिकायास्तादृश-बाधादि-विषयितान्तःपाति-व्यभिचारादिविषयिताया अपि तादृशबाधादिविषयिताप्रयोज्यायां विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां प्रयोजकतया तादृशबाधादेः संग्रह इति वाच्यम्। यत्किञ्चिद्विशिष्टान्तर-विषयितात्व-व्यापक-रूपावच्छिन्नाप्रयोज्यता-निवेशे न तत्संग्रह सम्भवात्। व्यभिचारादिविषयिताया बाधादिविषयितान्तःपाति-विषयितामात्र-वृत्तिरूपेणैव उपदर्शित साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकतया तेनैव रूपेण तादृशसाध्यावगाहिताविरहवत्त्वप्रयोजकत्वात् तादृशस्य च बाधादिविषयितानन्तःपातिव्यभिचारादिविषयितासाधारण-व्यभिचारादिरूपविशिष्टान्तरविषयितात्वाव्यापकत्वात् तद्व्यापकरूपावच्छिन्नाप्रयोज्यत्वस्य उक्तबाधादिविषयिताप्रयोज्य उक्तसाध्यावगाहित्वाभाववत्तायामक्षतत्वात्। मेयत्वविशिष्टव्यभिचारादिविषयिताया येन रूपेण व्याप्त्यादिग्रहप्रतिबन्धकतावच्छेदकत्वं तद्रूपेण निरुक्तविषयितात्वव्यापकेन मेयत्वविशिष्टव्यभिचारादिविषयितान्तःपातिव्यभिचारादिविषयिताया मेयत्वविशिष्टव्यभिचारादिविषयिताप्रयोज्य व्याप्त्याद्यवगाहित्वाभाववत्तायां नियमतः प्रयोजकत्वान्नातिप्रसङ्गावकाशः बाधसत्प्रतिपक्षादिविषयकज्ञानस्य नानाविधबाधादिविषयकज्ञानस्य वा अनन्तरं जातायां घटानुमितौ या बाधादिविषयिताप्रयोज्याभावाधिकरणता तस्याविशिष्टान्तरविषयताप्रयोज्यत्वेऽपि स्वपूर्ववर्त्तिज्ञानीयविषयिताया एव स्वनिष्ठप्रतिवध्यतावच्छेदकाभावाधिकरणताप्रयोजकत्वात् एकैकविधबाधादिमात्रज्ञानान्तरजातज्ञाने या तत्तद्बाधादिविषयताप्रयोज्याभावाधिकरणता तस्याविशिष्टान्तरविषयित्वाप्रयोज्यतया बाधादौ लक्षण-

समन्वयः। व्यभिचारादिघटितबाधादिविषयिताप्रयोज्याया दीधितिकृदुक्तोभयाभावाधिकरणताया व्याप्त्याद्यवगाहिताविरहप्रयोज्यत्वेन यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्न तादृशबाधादिविषयितानन्तःपातिव्यभिचारविषयितासाधारणव्यभिचारादिविषयितात्वावच्छिन्नप्रयोज्यत्वनियमात् तत्संग्रहाय तादृशोभयाभावप्रयोजकाभावाधिकरणतापर्य्यन्तनिवेशः। तथा सति उपदर्शितोभयाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयिताप्रयोज्यत्वनियमेऽपि तादृशाधिकरणताप्रयोजक साध्यादिमत्त्वावगाहित्वाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वाप्रयोज्यत्वेन तादृशबाधादेः संग्रह इति दिक्।

ननु काञ्चनमयः पर्वतो वह्निमान् धूमादित्यादौ पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्ध्या विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्यावगाहित्वा-प्रसिद्धिरित्याश्रयासिद्ध्यादावव्याप्तिरित्यत आह पक्षतावच्छेदकेत्यादि। आदिपदात् साध्यतावच्छेदकवैशिष्ट्यादिपरिग्रहः। वैज्ञानिकमिति तत्प्रकारेण ज्ञायमानत्वरूपमित्यर्थः। तथा च पर्वतादेः काञ्चनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेऽपि तेन रूपेण ज्ञायमानत्वमादाय लक्षणसमन्वय इति भावः। नच ह्रदो न वह्निमानित्यादिनिश्चयानन्तरं ज्ञायमाने ह्रदो द्रव्यं जलमयो वह्निमान् वह्निव्याप्यधूमवांश्च इत्याकारकसमूहालम्बने ह्रदत्वादिना ज्ञायमाने वह्न्यादिवैशिष्ट्यावगाहित्वसत्त्वादसम्भव इति वाच्यम्। पक्षतावच्छेदकावच्छिन्ना या पक्षनिष्ठविशेष्यता तन्निरूपिता या साध्यतावच्छेदकावच्छिन्न साध्यप्रकारता या च साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपित व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुप्रकारता तत्प्रतियोगित्वयोरवगाहितान्तद्वयेन

विवक्षणात् । विशिष्टविषयाप्रसिद्धावपि पर्वतांशे काञ्चनमयत्वावगाहिभ्रमविषयतायां व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नायाः प्रसिद्ध्या लक्षणसमन्वयात् व्याप्तिप्रकारताखाने च निरूप्यनिरूपकभावापन्नव्याप्तिघटकतत्तत्पदार्थप्रकारता निवेशनीया तेन धूमवान् वह्नेरित्यादौ वह्निव्यापकधूमसामानाधिकरण्यादिरूपव्याप्तेरप्रसिद्धावपि न क्षतिः ।

नन्वत्र व्याप्तिपदेनान्वयव्याप्तिश्चेद्विवक्ष्यते तदा व्यतिरेकव्याप्तिज्ञानविरोधिनि साध्यादिनिष्ठाभावाप्रतियोगित्वरूपानुपसंहारित्वेऽव्याप्तिस्तज्ज्ञानस्यान्वयव्याप्तिज्ञानाविरोधित्वात् व्यतिरेकव्याप्तिविवक्षणे च हेतुनिष्ठसाध्याभाववद्वृत्तित्वसाध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादावव्याप्तिः । तज्ज्ञानस्य ग्राह्याभावाद्यनवगाहितया व्यतिरेकव्याप्तिज्ञानविरोधित्वे मानाभावादत आह व्याप्तिश्चेति । अन्वयतः अन्वयनिरूपिता प्रकृतहेतुनिष्ठप्रकृतसाध्यनिरूपितेति यावत् । सा चात्यन्ताभावान्योन्याभावभेदेन भिन्ना अव्यभिचरितत्वसामानाधिकरण्यरूपा नानाविधैव ग्राह्या अतोऽत्यन्ताभावादिगर्भव्याप्तिज्ञाने अन्योन्याभावादिगर्भव्यभिचारज्ञानस्य व्यापकत्वादिज्ञाने साध्याभाववद्वृत्तित्वादिज्ञानस्य च ग्राह्याभावानवगाहितया अविरोधित्वेऽपि न क्षतिः । व्यतिरेकतः व्यतिरेकनिरूपिता साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा ग्राह्या व्याप्तिपदेन विवक्षणीया तथा च तत्तद्व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताप्रतियोगित्वकूटाभाव एव निवेशनीय इति भावः ।

ननु निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकाविशिष्टे साध्यतावच्छेदकविशिष्टत्वे विशिष्टावगाहित्वमेवाप्रसिद्धमिति कथं लक्षणसमन्वय? इत्यत आह तादृशावगाहित्वप्रसिद्धिरिति ।

साध्यार्थज्ञान एवेति निर्वह्नित्वविशिष्टवह्निमत्त्वं जायतामित्याकारकेच्छाजन्यप्रत्यक्ष एव इत्यर्थः । विरोधिविषयिताप्रयुक्तत्वनिवेशनप्रयोजनमाह एवञ्चेति । विरोधिविषयिताप्रयुक्तत्वनिवेशनेन च इत्यर्थः । न क्षतिः न निर्वह्निः पर्वतो वह्निमानित्यादौ घटादौ अतिव्याप्तिः । तस्य घटादिनिश्चयस्य विरोध्यविषयकत्वात् स्वानन्तरानुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोजकविरोधिविषयिताकत्वविरहात् वह्निमत्पर्वतादिविषयकसमूहालम्बनात्मकघटादि-निश्चयानन्तरजातज्ञाननिष्ठतादृशोभयाभाववत्त्वस्य तज्ज्ञानीयविरोधिविषयिताप्रयुक्तत्वेऽपि घटादिनिश्चयाव्यवहितोत्तरानुमिति सामान्यान्तर्गत--समूहालम्बनानात्मकघटादिनिश्चयाव्यवहितोत्तरानुमितौ विरोधिविषयताप्रयुक्तोभयाभाववत्त्वविरहान्नातिव्याप्तिरिति भावः । प्रयोज्यप्रयोजकभावश्चायमनुभवसिद्धः स्वरूपसम्बन्धविशेषः विरोधिपदप्रयोजनमाह एवमिति अननुमितौ अपीति न क्षतिः तस्य विरोध्यविषयिकत्वादित्यनुषज्यते न क्षतिः न साध्यवत्यक्षेऽतिव्याप्तिः विरोधिविषयितापदेन तादृशोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयितायाः साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयिता वह्निभूतविषयिता वा विवक्षितत्वादिति भावः ।

नच सिषाधयिषाधीनायां साध्यनिश्चयोत्तरसमूहालम्बनानुमितौ तादृशोभयाभावसत्त्वात् सिद्धिविषयेऽतिप्रसङ्ग एव नास्ति एवं पक्षे साध्यनिश्चयोत्तरं तदतिरिक्तविषयकसाध्यविधेयकानुमितेरनुत्पादेऽपि पक्षांशे साध्यांशे वा अधिकांवगाहिन्या अनुमितेः साध्यधर्मितावच्छेदकान्यविधेयककानुमितेः साध्यावच्छि-

अपक्षविधेयकानुमितेश्चोत्पत्त्या तत्रोभयाभावसत्त्वादपि नाति-प्रसङ्गप्रसक्तिरिति वाच्यम्। यत्र विषयविशेषे सिषाधयिषावला-त्सिध्युत्तरं तादृशानुमितिः प्रकृतसाध्यसिद्धप्रतिबध्यसाध्या-दिविषयकानुमितिश्च कदापि न जाता तत्रैवातिव्याप्तेः सम्भ-वात्। द्वितीयकल्पे विषयितामात्रं निवेश्यं न तु विरोधिवि-षयितापर्य्यन्तमित्याशयेनाह मानसज्ञानेति साध्यनिश्चयस्ये-त्यादिः।

अथ तादृशोभयाभावघटितलक्षणेऽपि केवलनिर्वह्नित्वादि-पक्षतावच्छेदककवह्न्यादिसाध्यस्थलीयनिर्वह्निनिष्ठवह्न्यभावरूप बाधादिदोषेऽव्याप्तिः। तादृशबाधादिज्ञानस्याप्रतिबन्धतया तद्दो-षविषयितायाः प्रतिबन्धकतानवच्छेदकतया तथाविधोभयाभा-वाप्रयोजकत्वात् तस्य दोषत्वानुगमे च तादृशहेतौ दुष्टत्वव्यवहा-रानुपपत्तेः। तत्रेष्टापत्तौ च निर्वह्निपर्वतो वह्निमानित्यादावपि तत्सम्भवेनैतादृशप्रयासवैफल्याच्च। न च तत्राभाववान् वह्निमा-नित्यनाहार्य्यज्ञानस्य प्रसिद्ध्या तत्प्रतिबन्धकीभूतस्याभाववन्नि-र्वह्निरित्यादिज्ञानस्य विषय एव दोष इति वाच्यम्? अभावव-त्त्वसामानाधिकरण्येन निर्वह्नित्वग्रहस्य तादृशवह्निमत्वग्रहा-विरोधित्वात्। अभाववत्त्वावच्छेदेन वह्न्यादिमत्ताग्रहविरोधित्वे-ऽपि तादृशवह्न्यादिमत्तावगाहित्वस्य वह्न्यभावादिमत्वरूपप-क्षतावच्छेदविशिष्टसाध्यवैशिष्ट्यावगाहित्वाव्यापकतया तदवच्छि-न्नप्रतिबन्धकतावच्छेदकविषयितायास्तथाविधोभयाभावाप्रयोज-कत्वात् तद्विषयस्य दोषत्वानुपपत्तेः। अभाववत्त्वावच्छेदेन निर्व-ह्नित्वग्रहस्य भ्रमरूपतया तद्विषयविशिष्टस्यैवाप्रसिद्धेः एवं वह्नि-मान् निर्वह्निरित्यादिस्थलीयदोषे नितरामव्याप्तिः वह्निमन्निष्ठ-वह्निमत्वादेरेव तत्र दोषत्वसम्भवात् तद्विषयकज्ञानस्य च क्वचि-दपि प्रतिबन्धकत्वायोगात् एवं यत्र निर्वह्निः पर्वतो वह्निमानि-

त्वादौ पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिमत्त्वस्य पक्षतावच्छेदकघटकता तत्र पर्वततत्त्वादिसामानाधिकरण्येन वह्न्यादिमत्त्वं न दोषः विशिष्टपक्षप्रत्यक्षविरोधित्वेनाश्रयासिद्ध्यादिरूपतानुपपत्तेरुक्तरीत्यैतल्लक्षणानाक्रान्तत्वाच्च पर्वतत्वावच्छेदेन वह्न्यादिमत्त्वस्याप्रसिद्धं वह्निशून्यपर्वतादेरपि सत्त्वात् नापि पर्वतत्वसामानाधिकरण्येन निर्वह्निपर्वतत्वाद्यवच्छेदेन वा वह्न्यभावादिमत्त्वरूपबाधादिर्दोषः । तज्ज्ञानस्य पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वव्यापकविषयितार्घटितधर्मावच्छिन्नाप्रतिबन्धकतया तत्र लक्षणगमनायोगात् नापि पर्वतत्वावच्छेदेन वह्न्यभावादिमत्त्वम् अप्रसिद्धत्वादिति तत्र न कोऽपि दोष स्यात् । यत्तु प्रयुक्तत्वं व्यापकत्वं यद्विषयकनिश्चयनिष्ठविरोधिविषयिताया उभयाभावव्याप्यत्वञ्च स्वाश्रयताद‍ृशनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन ताद‍ृशसम्बन्धलाभायैव तदुत्तरमनुमितावित्युक्तम् एवञ्च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताद‍ृशोभयाभाव इति पर्य्यवसितम् । एवञ्च निर्वह्निर्वह्निमानित्यादिस्थलीयबाधादिविषयितायां स्वरूपसम्बन्धरूपोभयाभावप्रयोजकत्वासम्भवेऽपि निरुक्तोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकत्वं निविष्टं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नाभावप्रकारकत्वस्यैव विरोधिविषयकत्वार्थकतया तत्र पंतल्लक्षणं सुसमन्वयकमेव ताद‍ृशप्रयोजकत्वस्यानिवेशात् ।

न चैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्वारैव ताद‍ृशोभयाभावस्य विरोधिविषयसमूहालम्बनरूपटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताया असत्त्वादिति वाच्यं विरोधिविषयितानतिरिक्तवृत्तियद्विषयिताशालिनिश्चयस्य निश्चयात्वेन विवक्षणात् घटादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्ति

त्वविरहात्। न चैवं विरोधिविषयितानतिरिक्तवृत्तिर्यदीयविषयितात्वमित्येतावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यम्। यत्र पर्वतत्वसामानाधिकरण्येन वह्न्यादेः साध्यता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिमत्त्वस्य विषयिताया निरुक्तविरोधिविषयितानतिरिक्तवृत्तितया तत्रातिव्याप्तेर्वारकतया शेषसार्थक्यात् तदुपादाने च तादृशवह्न्यभावादिमत्त्वविषयकनिश्चयानन्तरं पर्वतत्वसामानाधिकरण्येन वह्न्याद्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति तत्तुच्छं निर्वह्निः पर्वतो वह्निमानित्यादौ यत्र पर्वतत्वं सामानाधिकरण्येन वह्न्यभावादेः पक्षतावच्छेदकता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वेनाश्रयासिद्धत्वनात्मकस्य हेत्वाभासान्तरताभयेनासम्भवलक्ष्यभावस्य निरुक्तविरोधिविषयितानतिरिक्तवृत्तिविषयिताकतया अतिव्याप्तेस्तादृशोभयाभावप्रतियोगितावच्छेदकगर्भं यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविशते तद्रूपावच्छिन्नविशेष्यकतत्संसर्गक तद्रूपावच्छिन्नप्रकारकानुमितित्वावच्छिन्न प्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकत्व रूपविरोधित्वस्य विषयितायां निवेशे तु शेषवैयर्थ्यम् उक्तरीत्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिश्च। यत्तु पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयितैव विरोधिविषयितापदार्थः। तथा च यन्निरूपिततादृशविषयिताशालि-निश्चयोत्तरानुमितित्वापकोभयाभावस्त्वमिति समुदितार्थः। निश्चयत्वञ्च विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वं कोटिद्वये विशेषण विशेष्यतावच्छेदकभावानापन्नत्वनिवेशात्। निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्य-

वैशिष्ट्यग्रहस्य एकत्र विरोधिद्वयप्रकारकत्वनियमेऽपि न तादृशवैशिष्ट्यावगाहिनिश्चयाप्रसिद्धिः। यदीयविषयिता तादृशनिश्चयावृत्तिस्तत्त्वमित्येतावति कृते ह्रदो वह्निव्याप्यधूमवान् इत्यादौ ह्रदनिष्ठवह्न्यभावादिमत्त्वेऽतिव्याप्तिः वह्न्यादिव्याप्यवत्त्वनिश्चयस्य वह्न्यादिनिश्चयवत् कार्य्यसहभावेन वह्न्यभावादिग्रहविरोधित्वाद्वह्न्यभावादिमत्त्व-विषयितायास्तादृश-निश्चयावृत्तित्वादिति न शेषवैयर्थ्यमिति तदपि न वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्च ह्रदो वह्न्यभाववान् इत्येतादृशाहार्य्यज्ञानोपगमेन वह्न्यभावादिमत्त्वविषयिताया वह्निव्याप्यादिमत्त्वनिश्चयवृत्तितया उक्तातिव्याप्त्यनवकाशेन शेषसार्थक्यानुपपत्तेः वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववान् इत्येतादृशाहार्य्यसाध्यादिवैशिष्ट्यनिश्चये ह्रदो वह्निमानित्यादिस्थलीयबाधादिविषयितासत्त्वेनासम्भवप्रसङ्गाच्च वह्न्यादिरूपधर्मितावच्छेदकानवच्छिन्नवह्न्यभावादिविशेषित ह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेऽपि घटादिनिरूपिताया अपि दोषविशेषविषयित्वावच्छिन्नाया विषयितायाः साध्यादिनिश्चयावृत्तितया घटादावुदासीनेऽतिव्याप्तेर्वारणाय यादृशविशिष्टविषयितासामान्यं तादृशनिश्चयावृत्तितादृशविशिष्टनिरूपितविषयिताया एव विरोधिविषयितेत्यनेन विवक्षणीयतयाऽसम्भवस्याप्रतीकारात् भ्रमान्यवृत्तियदीयविषयितासामान्यं तादृशनिश्चयावृत्तितदीयविषयिताया विवक्षणेन निर्वाहेऽपि विरोधियद्विषयिताशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यनभिधाय यद्विषयकनिश्चयस्येत्यादिवक्राभिधानस्य ग्रन्थकाररीतिविरुद्धत्वात्।

एतेन विषयताया उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगितावच्छेदकं यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटितं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रू-

पावच्छिन्नप्रकारकत्वविशेषितेनानुमितित्वेनानाहार्य्यं लौकिक-सन्निकर्षाद्यजन्यज्ञानत्वेन वा अवच्छिन्ना या प्रतिबध्यता तन्नि-रूपितप्रतिबन्धकतावच्छेदकत्वम् एवञ्च यादृशविशिष्टविषयिता-निरुक्त तथाविधोभयाभावप्रयोजकताश्रयस्तादृशत्वमेव लक्षणं विषयितादौ विरोधित्वादिकथनन्तु स्वरूपाख्यानमात्रमिति प्रलपितमप्यनादेयमेव। निर्वह्निमान् इत्यादिस्थलीयदोषस्य उक्तयुक्त्या दुःसंग्रहत्वात्।

अत्र केचित् कश्चिदित्यग्रिमग्रन्थकल्प इवात्रापि कल्पे न दीधि-कृतो निर्भरः निर्वह्निर्वह्निमान् इत्यादिस्थलीयदोषासंग्रहेणास्वर-सस्याग्रिमकल्पे कश्चिदित्यनेनात्रापि कल्पे वदन्तीत्यनेन सूचि-तत्वात् निर्भरस्तु केचिदित्यादिकल्प एव। अतएव तत्र प्रकर्षबोध-नाय प्राहुरित्युक्तमिति। परे तु घटाभावादिधर्मितावच्छेदककव-ह्न्यादिज्ञानं प्रति तद्धर्मितावच्छेदककवह्न्यभावादिमत्त्वज्ञानप्रति-बन्धकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तदकल्पनप्रयुक्तलाघ-वानुरोधेन धर्मितावच्छेदकमनिवेश्यानाहार्य्यविशिष्टबुद्धित्ववह्न्य-भावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रति-बध्यप्रतिबन्धकभावः कल्प्यते एवञ्च तद्देशनिष्ठस्य पूर्ववर्त्ति-प्रतिबन्धकनिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य उत्तरवर्त्ति-निष्ठं प्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशासम्बन्धित्वं प्रति प्रयो-जकतया वह्न्यभावादिनिष्ठवह्न्यभावादिप्रकारकज्ञानीयधर्मिता-वच्छेदकताख्य-विषयतायास्तदुत्तरोत्पन्नानाहार्य्य-वह्न्यादिप्रका-रकज्ञानस्य वह्न्यभावादिधर्मितावच्छेदकत्वविरहप्रयोजकत्वात् वह्न्यभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहस्य वह्न्य-भावादिधर्मितावच्छेदककवह्न्यभावादिप्रकारक-निश्चयीयविषय-ताप्रयुक्तत्वमक्षतमेवेति तादृशनिश्चयविषयस्य दोषत्वमव्याहत-मेवेति। न च धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीतज्ञानस्य

प्रतिबन्धकाले निर्वह्निविशेष्यकवह्निज्ञानं जायतामित्याकारके-च्छाजन्यस्य निर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानित्याद्यां-शिकाहार्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रा-न्ततया घटाभाववान् वह्न्यभाववानित्यादिनिश्चयकाले तथा-विधेच्छाकाले घटाभावविशिष्टविशेष्यकवह्निज्ञानं जायतामित्या-कारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यम् ।

यतः सामान्यतो वह्न्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमना-हार्यत्वं न प्रतिबध्यतावच्छेदककोटौ निवेशनीयं किन्त्वाहार्य-ज्ञानोपपत्त्यर्थं विशेष्यतानिष्ठं यत् स्वविषयतावच्छेदकत्वं तद-वच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्न प्रतियोगिताकवह्न्यादि-ज्ञानेच्छाविरहस्य या स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्ब-न्धत्वमुपेयते तादृशेच्छाविरहस्य प्रतिबन्धकविशेषणत्वमेव वा विशेषणता-विशेषधर्मितावच्छेदकतासम्बन्ध -घटितसामानाधि-करण्यसम्बन्धेनोपगन्तव्यम् उक्तस्थले च घटाभावादौ तादृशेच्छा-विरहस्य सत्त्वान्नोक्तापत्तिरधिकमन्यत्रानुसन्धेयमिति वदन्ति ।

निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण लक्षणं वर्णयतां केषाञ्चिन्मतमाह तादृशपक्ष इति पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः । तादृशसाध्य इति साध्य-तावच्छेदकविशिष्टसाध्य इत्यर्थः । तादृशहेत्विति हेतुताव-च्छेदकविशिष्टहेत्वित्यर्थः । ज्ञानस्य विरोधिविषयकं यद्विष-यकं ज्ञानमिति योजना ज्ञानं ज्ञानसामान्यमिति तेन घटादि-विषयकस्य कस्यचित् समूहालम्बनस्य तादृशज्ञानविरोधिबा-धादिविषयकत्वेऽपि नातिप्रसङ्गः । तथा च स्वावच्छिन्नविषय-कत्वव्यापकतादृशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति फलि-तार्थः ।

अत्र च विषयितानिष्ठं स्वरूपसम्बन्धरूपताट्टशज्ञानविषय-विषयकग्रहप्रतिबन्धकतावच्छेदकतात्मकताट्टशज्ञानविरोधित्व-मेव निवेशनीयं न तु विषयनिष्ठं निर्वाच्यं ताट्टशज्ञानविरोधित्वं तस्यैव लक्षणत्वसम्भवेन शेषवैयर्थ्यप्रसङ्गात्। अत्र च विषयनिष्ठस्य निर्वाच्य ताट्टशज्ञानविरोधित्वस्य तदपेक्षया लघुतया तदेवाह ताट्टशज्ञानविरोधित्वं वेति ताट्टशज्ञानविरोधित्वं यदि ताट्टशज्ञानप्रतिबन्धकतावच्छेदक स्वावच्छिन्नविषयताकधर्मवत्त्वं तदा पूर्वनिरुक्त यथाश्रुतमूलार्थ एव पर्य्यवसानान्निर्वह्निः पर्वतो वह्निमान् इत्यादिस्थलीयदोषाव्याप्तितादवस्थ्यमिति तन्निर्वह्नि ज्ञानविरोधित्वञ्चेति तद्विषयविषयकेति। तथा च निर्वह्निः पर्वतो वह्निमानित्यादौ ताट्टशज्ञानविरोधिज्ञानाप्रसिद्धावपि तद्विषयविषयकस्य निर्वह्निः पर्वत इत्यादिज्ञानस्य प्रतिबन्धकं यद्वह्निमान् पर्वत इत्यादिज्ञानं तद्विषयतामादायैव वह्निमत्पर्वतादिरूपतत्स्थलीयाश्रयासिद्ध्यादौ लक्षणं समन्वयः।

अथ घटवद्भूतलादिरूपोदासीन-पदार्थविषयक-समूहालम्बनात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतद्व्याप्यहेतुप्रकारकज्ञानविषयविषयिक-घटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटाभाववद्भूतलादावतिव्याप्तिः। न च पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यतन्निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकग्रहत्वव्यापकविषयिता घटितधर्मावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वनिवेशान्न दोषः। घटवद्भूतलादिविषयितायास्ताट्टशग्रहत्वाव्यापकत्वादिति वाच्यम्। यतः पर्वतांशे वह्निमत्त्वाद्यनवगाहिनो निर्वह्निः पर्वत इत्यादिज्ञानस्य या वह्निप्रकारकत्वाद्यनिरूपिता निर्वह्नित्वादिप्रकारतानिरूपितपर्वतादिविषयिता सैव धनाद्याश्रयत्वविशिष्टतया वह्निमान्

पर्वत इत्यादिज्ञानप्रतिबध्यतावच्छेदिका तथाच निर्वह्निः पर्वतो वह्निमानित्याकारकाहार्य्यज्ञानसाधारण्ये मानाभावः । आहार्य्यज्ञानसामग्र्यास्तादृशविषयिताप्रयोजकत्वासिद्धेः विपरीतज्ञानाभावघटितायास्तादृशविषयता-प्रयोजकानाहार्य्यज्ञान-सामग्र्याश्चाहार्य्यज्ञानाजनकत्वात् तादृशग्रहत्वव्यापिका च वह्निमत्वादिप्रकारता निरूपिता तादृशपर्वतादिविषयिता सा च न प्रतिबध्यतावच्छेदिका इति निर्वह्नित्वादिप्रकारता निरूपित-पर्वतादिविषयतात्वेन निर्वह्निः पर्वत इत्यादिज्ञानीयविषयितापि तथाविधग्रहत्वव्यापिका इति चेत्तर्हि विषयितात्वादिना तद्व्यापकतया उदासीनपदार्थवारणमशक्यम् । मैवं यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारतात्वावच्छिन्नं तादृशग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यकं तद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्न-प्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदक-स्वावच्छिन्न-निरूपितविषयिताकधर्मवत्त्वस्य विवक्षणीयतया सर्वसामञ्जस्यादिति दिक् ।

अत्र चास्वरससूचनाय कश्चिदिति स चोक्तयुक्त्या । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहेण न च धर्मितावच्छेदकतावच्छेदकताप्रत्यासत्त्या वह्निप्रकारकग्रहं प्रति वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकतामते निर्वह्निर्वह्निमानित्येतादृशज्ञान-समानविषयकानाहार्य्यप्रतिबन्धकतामादाय लक्षणसमन्वयः । तथापि सम्भवतीति वाच्यं तादृशमताश्रयणे पर्वतो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादेर्दोषताप्रसङ्गादिति । यादृशेति । सर्वत्र यद्रूपावच्छिन्नार्थकं तावदन्यान्यत्वमिति अत्र च यादृश-पक्षसाध्यहेतुकस्थले यादृशदोषज्ञानस्य प्रतिबध्यज्ञानं प्रसिद्ध्यति यथा निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निविशिष्टपर्वतादिरूपाश्रयासिद्धि-धूमाभाववद्विशिष्ट-निर्वह्निरूपपक्षरूपासिद्ध्या-

टीनां तत्र तादृशदोषाणां ग्राह्याभावतद्व्याप्यरूपघटकभेदेन विशेषण विशेष्यभावभेदेन च विभिन्नानाम् अनुगतेन विशिष्टपक्षे विशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपासिद्धित्वादिना एव तादृशान्यान्यत्वघटकभेदप्रतियोगिविधया निवेशः। न तु वह्निविशिष्टपर्वतत्वनिर्धूमत्वविशिष्टनिर्वह्नित्वादिना प्रयोजनविरहात्। यादृशदोषविषयकज्ञानस्य प्रतिबध्यज्ञानमप्रसिद्धं यथा तत्स्थलीयस्य निर्वह्निर्वह्निमानित्यादिस्थलीयस्य च बाधादेर्ज्ञानस्य तादृशदोषाणामगत्या वह्न्यभावविशिष्टनिर्वह्नित्ववह्न्यभावव्याप्यविशिष्टनिर्वह्नित्वनिर्वह्निनिष्ठवह्न्यभाववत्त्वादिना अननुगतरूपेणैव निवेशः।

अत्र च विशिष्टभिन्नभिन्नत्वस्य शुद्धविशिष्टसाधारणतया सर्वमाकाशवदित्यादौ आकाशाभावविशिष्टसर्वादिरूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तद्विशिष्टनिरूपितविषयितान्यतमविषयिता निरूपकतावच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वमेवाभिमतम्। अयञ्च प्रकारो यादृशपक्षसाध्यहेतुकस्थले समूहालम्बनानुमितेरप्रसिद्धिस्तत्रैवादरणीयः। यत्र तु तत्प्रसिद्धिस्तत्र लाघवाद्यथाश्रुतमूललक्षणमेव साधीयः शब्दाभेदस्याकिञ्चित्करतायाः स्वयमेव वक्ष्यमाणत्वादित्यवधेयम्।

यत्र चाश्रयासिद्ध्यादिरेकविध एव दोषः प्रतिबध्यज्ञानञ्च प्रसिद्धं महानसत्ववान् पर्वतो वह्निमान् धूमादित्यादौ तत्र विशिष्टपक्षग्रहविरोधित्वादिरूपाश्रयासिद्धित्वादेरेव दोषसामान्यलक्षणमुचितं न तु महानसत्वाद्यभावविशिष्टपर्वतत्वाद्यवच्छिन्नादिभिन्नभिन्नत्वस्य निरुक्त समूहालम्बनानुमितिविरोधित्वस्य वा गौरवादित्याशयेनाह एकमात्रदोषस्थल इति। एक एव यत्र दोषस्तद्विषयकज्ञानप्रतिबध्यज्ञानञ्च प्रसिद्धं तादृशस्थल इत्यर्थः। तेन ग्राह्याभावतद्व्याप्यभेदेन विशेषणविशेष्य-

भावभेदेन च सर्वत्र दोषाणां नानात्वसम्भवात् एकमात्रदोषस्थल-स्वाप्रसिद्धत्वेऽपि पर्वतान्यः पर्वतो वह्निमान् धूमादित्याद्या-येकविधमात्रदोषस्थले आश्रयाभावतद्व्याप्यरूपघटकादिभेदेन विभिन्नाश्रयासिद्ध्यादीनामनुगमकाभावेनान्यतमत्वस्य लक्षण-तया आवश्यकत्वेऽपि च न क्षतिः। तत्त्वं तादृशत्वं विरुद्धाश्रया-सिद्धित्वादिकमिति यावत्।

इदमुपलक्षणं यत्र परामर्शविरोधिनो व्यभिचारविरोधा-सिद्धयस्त्रयोदोषा न तु बाधप्रतिरोधौ तत्र परामर्शविरोधित्व-मेव सामान्यलक्षणं यत्र च बाधप्रतिरोधासिद्धयो दोषा न तु व्यभिचारविरोधौ ह्रदो वह्निमान् धूमात्काञ्चनमयह्रदो वह्नि-मान् धूमात् ह्रदः काञ्चनमयवह्निमान् धूमात् ह्रदो वह्निमान् काञ्चनमयधूमात् इत्यादौ तत्र विशिष्टपक्षे विशिष्टसाध्यसाधन-योर्वैशिष्ट्यावगाहियज्ज्ञानं तद्विरोधित्वमेव तथा एवं यत्र व्यभिचारासिद्धी एव दोषौ काञ्चनमयपर्वतो धूमवान् वह्नि-रित्यादौ तत्र विशिष्टपक्षविषयकव्याप्तिविशिष्टसाधनग्रहविरो-धित्वादिकं तथेत्यपि बोध्यम्।

ननु तद्धर्मावच्छिन्न-भिन्नभिन्नत्वरूपलक्षण-घटक--तद्धर्माणां भागासिद्धतया हेत्वाभाससामान्येतरभेदाननुमापकत्वेऽपि व्यभि-चारबोधकतया तदितरांशवैयर्थ्यमित्यत आह स चेति। स च अन्योन्याभावोऽतिरिक्त एवेति योजना स च तत्तद्धर्मावच्छिन्न-प्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकः अतिरिक्तस्तद्ध-र्मातिरिक्तः तथा च धर्मिभेदान्न वैयर्थ्यं तत्तद्धर्मावच्छिन्नभेद-मात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वप्रतियोगिताव-च्छेदकीभूतभेदप्रतियोगितावच्छेदक तद्धर्मरूपत्वेऽपि तादृश-भेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कल्पनापे-क्षया तद्विशिष्टस्यैकभेदस्य लाघवेन कल्पयितुं युक्तत्वादित्यभि-

प्रायः। एतच्च यथाश्रुताभिप्रायेण तत्तद्धर्मावच्छिन्ननिरूपित-विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य लक्षणत्वे त्वधिकविकाशकतया (अधिकदेशवृत्तितया इत्यर्थः) विशेषणसार्थक्यमित्यवधेयम्।

ननु साध्यादिभेदेन लक्षणभेदे ह्रदो वह्निमान् धूमादित्यादिस्थलीयलक्षणस्य पञ्चविधहेत्वाभाससाधारण्यासम्भवात् तादृशलक्षणाक्रान्तानां पञ्चविधोक्त्यसङ्गतिरित्यत आह पञ्चविधभेदोक्तिरिति पञ्चविधोक्तिरित्यर्थः। तत्सम्भवस्थलेति यत्र पञ्चानामेव हेत्वाभासानां सम्भवः गौरश्वो घटत्वादित्यादौ तत्स्थलीयलक्षणाक्रान्तस्य पञ्चविधत्वाभिप्रायेणेत्यर्थः।

ननु एवं लक्षणाननुगमादितरभेदानुमाने भागासिद्धिरित्यत आह व्यभिचारादेरिति। साध्यादिभेदनियन्त्रितत्वात् साध्यादिभेदनियन्त्रितलक्ष्यतावच्छेदकत्वात् तथा च लक्षणस्येव लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः।

ननु एवमप्यनुगतोक्त्यसम्भवात् नायं साधीयानित्यत आह शब्दाभेदस्येति। इदं पुनरिहावधेयं तावदन्यतमत्वमितरभेदानुमापकमेव न तु दोषपदप्रवृत्तिनिमित्तम्। तथा सति निर्वह्नित्व-विशिष्टे वह्नेः साधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभाव-विशिष्टनिर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकतया निर्वह्नित्ववि-शिष्टे वह्निसाधने इत्यादेरनन्वितार्थकत्वप्रसङ्गात्। अप्रसिद्ध्या तस्य हेत्वन्वयिनिर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वा-र्थकत्वासम्भवात् किन्तु अभावप्रयोजकसमान्यवृत्तिविषयता-निरूपकत्वमेव। तथा उक्तस्थले च प्रकारताप्रकारतानिरूपित-व्याप्तिप्रकारतानिरूपितधूमत्वाद्यवच्छिन्नप्रकारता च उभयमेव साधनपदार्थः। प्रकारतारूपसाधनपदार्थेऽपरपदार्थैकदेशे व्याप्ति-प्रकारतानिरूपकप्रकारतायाश्च षष्ठ्यन्तवह्निपदवाच्यस्य वह्नि-

निष्ठत्वस्य स्वरूपसम्बन्धेन साधनपदार्थोक्तप्रकारताद्वये च सम्-स्यन्तार्थस्य निर्वह्नित्वादिविशिष्टविशेष्यतया निरूपितत्वसम्ब-न्धेनान्वयः। साधनपदोत्तरसप्तम्या निरूपकत्वं द्वित्वञ्चार्थः। निरूपकत्वे च निरुक्तसाधनपदार्थयोः पृथगन्वयः तदन्वितनि-रूपकत्वे द्वित्वान्वयः। द्वित्वान्विततादृशनिरूपकत्वयोः दोषप-दार्थघटकाभावे च (प्रतियोगितासम्बन्धेनेत्यर्थः) अन्वयः। तथा च निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपक-त्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपित-व्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकवानित्येवा-न्वयबोधः। प्रतिबन्धकीभूतभ्रमविषयितानिरूपकाभावादिमत्त्व-मादाय पर्वते वह्निसाधने धूमो दुष्ट इति प्रयोगवारणाय विष-यितायां भ्रमान्यवृत्तित्वं निवेशितम्। दोषघटककेवलसाध्यादौ दोषव्यवहाराभावादत्रायं दोष इत्यादौ स्वविषयकनिश्चयाव्यव-हितोत्तरानुमिति निष्ठतादृशोभयाभावाधिकरणतात्वव्यापकवि-रोधिविषयिताप्रयोज्यताकधर्म एव दोषपदार्थ इति दिक्।

असाधारणस्य पक्षवृत्तित्वे सति साध्यव्यापकीभूताभाव-प्रतियोगितात्मकस्य सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्या-प्यवत्त्वरूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्त्वज्ञानप्रतिबन्ध-कत्वं निर्विवादमेव। एवञ्च तज्ज्ञानदशायां हेतोरनुमित्यजनक-त्वात् तद्बुद्धेः प्रतिबन्धकत्वमावश्यकमित्येतादृशयथार्थपरस्य दशाविशेष इत्यादिमूलस्यानुस्थितिः।

अन्यथा साधारण्यादिज्ञानप्रतिबन्धकताया अपि व्यवस्थाप-यितुमुचितत्वादतस्तादृशस्थलमन्यथा व्याख्यातुमवतरणिका-माह स्यादेतदिति। इत्यत्र असाधारणे एतत्स्थलीयासाधारण्-दोषे हेतुविशेष्यकभ्रमविषये सर्वसाध्यवद्व्यावृत्त्यात्मकेऽव्याप्ति-

इति तद्विषयकत्वस्य निरुक्तानुमित्यप्रतिबन्धकहेत्वविषयकज्ञा-साधारणतया तादृशप्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः।

ननु केवलं सर्वसाध्यवदवृत्तित्वं न दोषः अपि तु साधनवृत्तित्वविशिष्टं तादृशविशिष्टविषयकत्वं न प्रतिबन्धकत्वातिरिक्तवृत्तीत्यत आह सर्व इति। तत्र हेतौ असत्त्वादवृत्तेः साध्यवति पक्षे हेतोर्वृत्तेरिति शेषः। तथा च तादृशविशिष्टस्याप्रसिद्धया तस्य दोषत्वासम्भवेन प्रसिद्धस्याविशिष्टसाध्यवदवृत्तित्वस्यैव तत्र दोषतायां आवश्यकत्वमिति भावः।

अद्रव्यद्रव्यत्वादाविति असमवेतद्रव्यत्वादावित्यर्थः। असमवेतत्वस्य ध्वंसादिसाधारणतया नित्यत्वव्याप्यत्वासम्भवाद्विशेष्यांशनिवेशः। अत्राप्यनन्तरमव्याप्तिरित्यनुषज्यते तद्विषयकत्वस्य पक्षाविषयकज्ञानसाधारणतया प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः। ननु केवलं नित्यत्वव्याप्यद्रव्यद्रव्यत्वादिकम् अत्र न दोषः अपितु पक्षनिष्ठतद्वत्त्वमेव। तादृशविशिष्टविषयकत्वन्तु प्रतिबन्धकतानतिरिक्तवृत्तीत्यत आह पक्षस्येति। तथा च पक्षघटितविशिष्टस्याप्रसिद्धतया पक्षाघटितस्यैव दोषत्वमावश्यकमिति भावः। तयोस्तादृशस्थलीययोर्दोषत्वाभिमतयोरुक्तधर्मयोः शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादिविशेष्यकनित्यत्वव्याप्यत्वादिज्ञानविषयविशिष्टस्य प्रसिद्धया तत्राव्याप्तेः शङ्कानास्पदत्वात् अलक्ष्यत्वाभ्युपगमेन तत्परीहारस्य चात्यन्तासम्भववद्युक्तिकत्वाद्धेतुपदं सद्धेतुपरतया व्याचष्टे हेत्वोरिति। सद्धेत्वोः साध्यवदवृत्तित्वरूपासाधारण्यसाध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षत्वासम्भवात् असाधारणसत्प्रतिपक्षपदम् अन्यथा व्याचष्टे असाधारणेति। तथा प्रकृते सत्प्रतिपक्षपदार्थः सद्धेत्वोर्दुष्टत्वरूपत्वाभावादाभासपदम् अन्यथा व्याचष्टे आभासत्वादिति। सद्बुद्धेरित्यत्र तत्पदस्य हेतुपरत्वं न सम्भवति सत्प्रतिपक्षस्थले

प्रतिबन्धकज्ञानस्य हेतुविषयकत्वानियमाद्धेतुविषयकत्वकथनस्याप्रयोजकत्वाद्बुद्धिपदस्यापि बुद्धिसामान्यपरत्वं न सम्भवति। हेत्वादिमात्रविषयकज्ञानस्याप्रतिबन्धकत्वादतस्तत्पदस्य हेतुपक्षोभयपरतया बुद्धिपदस्य च साध्यवद्व्यावृत्तत्वसाध्याभावव्याप्यवत्त्वावगाहिबुद्धिपरतया तद्बुद्धिपदं हेतुविषयकसाध्यवद्व्यावृत्तत्वबुद्धिपक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धिपरत्वेन व्याचष्टे तद्बुद्धेरिति। तयोरलक्ष्यतालाभाय हेत्वोरित्यनन्तरश्रुत एवकारोऽन्यत्र योजनीयः। तदर्थमन्तर्भाव्य व्याचष्टे प्रतिबन्धकत्वं परमायातीति। परं केवलम् अवधारणव्यवच्छेद्यम्। स्पष्टयति नन्विति। तद्विषयस्य ताद्दशबुद्धिविषयस्य दोषत्वं दोषलक्षणलक्ष्यत्वम् असत्त्वात् लक्ष्यताप्रयोजकस्यासत्त्वात् प्रतिबन्धकीभूतज्ञानप्रमात्वस्यैव तद्विषयस्य लक्ष्यताप्रयोजकत्वादिति भावः। असत्त्वात् विशिष्टस्याप्रसिद्धत्वादिति तु नार्थः। एकदेशस्याव्याप्तेराशङ्कितया विशिष्टस्याप्रसिद्धेस्तदलक्ष्यतानिर्वाहकत्वविरहेणानुपयोगात्।

अन्यथा प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वे बाधभ्रमेण पक्षे साध्याभावभ्रमेण तस्य तद्विषयसाध्याभावादेः नन्वेवमुक्तस्थले प्राचां दशाविशेषे हेत्वोर्दुष्टत्वप्रवादो नोपपद्यत इत्यत आह नियुक्तिकस्त्विति। उपदर्शितस्थलेऽपि दशाविशेषे हेतोर्दुष्टतामङ्गीकुर्वन्तस्तत्साधारण्याय लक्षणमन्यथा व्याचक्षते तन्मतमुपन्यस्यति यस्त्विति। ज्ञानस्येति षष्ठ्यन्तार्थस्य यत्पदार्थेऽन्वयः। तथा च ज्ञानसम्बन्धित्वविशिष्टं यद्रूपावच्छिन्नं यत्किञ्चित्सम्बन्धेनानुमितिप्रतिबन्धकतावच्छेदकमित्यर्थः। तत्रापि अवच्छेदकत्वमनतिरिक्तवृत्तित्वमुक्तयुक्तेः। तत्पदमुभयत्र तद्रूपविशिष्टपरं लक्षणार्थः व्युत्क्रमेण लक्षणयोरर्थः।

ननु एतावतैव दर्शितसत्प्रतिपक्षादौ कथं लक्षणसमन्वयः।

तत्र प्रतिबन्धकतावच्छेदकीभूतविशिष्टविषयकत्वस्याप्रसिद्धेः कथं व्यभिचारादिकमादाय सव्यभिचारादेरेव वा लक्षणगमनं व्यभिचारादिविषयकत्वस्यैव प्रतिबन्धकतावच्छेदकतया व्यभिचारादेव तथात्वादित्यत आह तच्चेति तादृशप्रतिबन्धकतावच्छेदकत्वञ्चेत्यर्थः। भ्रमात्मकबाधप्रतिबन्धकतामादाय आपादितायाः सद्धेतोर्दुष्टताया असम्भवं स्पष्टीकर्तुमाह बाधे चेति। बाधज्ञाननिष्ठप्रतिबन्धकतायाञ्चेत्यर्थः। अवच्छेदक इति शेषः। पक्षस्य वास्तवं साध्याभाववत्त्वं निविशते न तु वैज्ञानिकम् इति सूचयितुं प्रमितेति। विषयस्यावच्छेदकत्वे युक्तिमाह तद्विषयकत्वेनेति। तथा च विषयविषयकत्वस्येव विषयस्यापि विषयितया अवच्छेदकत्वमक्षतमेवेति भावः। विरोधिसामग्रीकालीनत्वादीति विरोधिकीव्यनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकत्वमित्यभिमानः। तथा च तदादायैव सत्प्रतिपक्षिते असाधारणे च सद्धेतौ दशाविशेषे दुष्टत्वमिति भावः।

ननु ज्ञाननिष्ठं विरोधिसामग्रीकालीनत्वमादाय कथं हेतोर्दुष्टत्वं तस्य ज्ञान एव सत्त्वात् इत्याशङ्कां परिहरति तद्वत्त्वञ्चेति विषयस्य हेतोरपीति तत्कालनिरूपिताधेयतात्मकस्य तत्कालीनत्वस्याधेयभेदेनापि भेदानभ्युपगमादभ्युपगमे वा आधेयतासम्बन्धेन तत्कालस्यावच्छेदकतया तमादायैव लक्षणसमन्वयसम्भवादिति भावः। नाभेदेनेति विवक्षितुं शक्यमिति शेषः। साध्याभाववद्वृत्तित्वादिविशिष्टसाधनरूपदोषस्याभेदेन हेतौ सत्त्वान्न तेन सम्बन्धेन तद्वत्त्वविवक्षाया अप्रसक्तिरतो बाधे तदभावादिति। वह्न्यभाववद्ध्रदादिरूपबाधे धूमादिहेत्वभेदासत्त्वादित्यर्थः। तथा च तत्राव्याप्तिरिति भावः। अतएव बाधिताव्याप्तेरेव नाश्रयतया तद्वत्त्वं विवक्षितमिति शेषः। धूमादेर्वह्न्यभाववद्ध्रदानाश्रयत्वादेकज्ञानविषयकत्वादिरूपसम्बन्धस्य चाधारत्वानिर्वा-

इकत्वादिति भावः । अव्याप्तिमुक्त्वा अतिव्याप्तिमप्याह वह्निव्यभिचारीति । ननु साध्याभाववद्वृत्तित्वादिरूपविषय एव प्रतिबन्धकतावच्छेदकं न तु तत्तद्विशिष्टद्रव्यत्वादि तदाश्रयश्च न धूमादिरित्याशङ्कां निराकरोति साध्याभाववदिति साध्याभाववद्वृत्तिहेतोर्ज्ञानस्येति तादृशहेतुविषयकज्ञानस्येत्यर्थः । तथा च वह्न्यभाववद्वृत्तिद्रव्यत्वादिकमपि विषयतया अवच्छेदकमिति शेषः ।

ननु धूमादेस्तादृशधर्मवत्त्वेऽपि वह्नौ साध्ये धूमो दुष्ट इत्यादिव्यवहारस्य नापत्तिसम्भवः । उक्तयुक्त्या तद्धेतुकानुमितिविरोधिरूपवत्त्वस्यैव तत्र दुष्टताव्यवहारनियामकत्वात् अन्यथा तत्राप्यप्रतीकारात् इत्यतोऽन्यत्रातिप्रसङ्गमाह साधारण्यादिविषयकत्वस्येति । ज्ञाननिष्ठस्य ज्ञानवृत्तित्वविशिष्टस्य सत्तादीति सत्तावान् ज्ञानादित्यादौ ज्ञानहेतुकसत्ताद्यनुमितिप्रतिबन्धकतावच्छेदकं ज्ञानाद्यंशे सत्ताद्यभाववद्वृत्तित्वावगाहित्वमादाय सत्त्वे साध्ये ज्ञानं दुष्टमित्यादिव्यवहारापत्तिरित्यर्थः । येन केनापि सम्बन्धेन तद्वत्त्वं विवक्षणीयमित्यपि दूषयति यथाकथञ्चिदिति । अतिप्रसञ्जकत्वादिति उक्तधर्ममादाय सत्तादिसाध्यकज्ञाने धूमाद्यंशे च यद्वह्न्यभाववद्वृत्तित्वावगाहित्वम् एकज्ञानविषयत्वादिसम्बन्धेन तदादाय वह्न्यादिसाध्यके धूमादावपि दुष्टत्वव्यवहारापत्तेरित्यर्थः । सत्प्रतिपक्षादिस्थले विरोधिसामग्रीकालीनत्वेन प्रतिबन्धकतामादाय लक्षणसमन्वय उपपादितः । तत् दूषयति विरोधिसामग्रीति । न स्वसाध्यानुमितिप्रतिबन्धक इति न स्वजन्यानुमितेः प्रतिबन्धक इत्यर्थः । कारणत्वप्रतिबन्धकत्वयोरेकत्रानभ्युपगमादिति हृदयम् ।

विभिन्नरूपेण तदुभयस्यैकत्रोपगमे प्रतिबन्धिसूचनायाह मणीति न प्रतिबन्धक इत्यनुषज्यते । तथा च विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादीनामनुमितिप्रतिबन्धकत्वे

मणिसमवहितत्वेन वह्न्यादीनामपि दाहप्रतिबन्धकत्वापत्तिः। मणिसमवहितत्वापेक्षया लाघवेन मणित्वेनैव प्रतिबन्धकता कल्प्यते इति चेत्तर्हि विरोधिसामग्रीकालीनत्वापेक्षया लाघवात् तादृशसामग्रीत्वेन विरोधिपरामर्शत्वेनैव वा प्रतिबन्धकत्वम्। प्रकृतेऽपि कल्पयितुमुचितमिति कथं विरोधिसामग्रीकालीनत्वमादाय सङ्गमनीयं तस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः। कार्य्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपं प्रतिबन्धकतावच्छेदकत्वमेव वा अत्र विवक्षितं न तु कारणीभूताभावप्रतियोगितावच्छेदकत्वरूपं तच्च विरोधिसामग्रीकालीनत्वेऽप्यक्षतमेवेत्याह अथेति।

यद्धर्मेति। यादृशधर्मविशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकोऽनुमित्यनुत्पादस्तादृशरूपमित्यर्थः। निश्चयत्वनिवेशात् बाधादिविषयकसंशयसंस्काराद्यव्यवहितोत्तरक्षणे कदाचिदनुमित्यनुत्पादेऽपि न क्षतिः। अत्र लक्षणे प्रतिबन्धकतावच्छेदकमुक्तं प्रतिबन्धकतावच्छेदकपदेन विवक्षितं भवति चेति विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वकथनं प्रतिबन्धकसमवहिताव्यवहितोत्तरक्षणे कार्य्यानुत्पादस्यावश्यकतया विरोधिसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकताया आवश्यकत्वदर्शनाय तथा अवश्यमनुमित्यनुत्पादे विरोधिसामग्र्याः प्रतिबन्धकत्वं यदुक्तं तदेव दूषयति न वेति न क्षीत्यर्थः। कालादीति घटिता इत्यन्तं हेतुगर्भविशेषणम्। तथा च कारणसमुदायः सामग्री सा च क्वचिदपि न प्रतिबन्धिका कालादिसाधारणकारणानामपि तदन्तर्निविष्टत्वात्तेषाञ्च प्रतिबन्धकतावच्छेदककोटौ निवेशस्य निष्फलत्वात् प्रतिबध्यकार्य्येऽपि तेषामनुगुणत्वादित्यर्थः।

सत्प्रतिपक्षस्थले विरोधिकोट्यनुमितिसामग्र्यास्तत्कोट्यनु-

मितिप्रतिबन्धकत्वम् अत्यन्तासम्भवदुक्तिकमेव तत्फलानुत्पादेन सामग्र्या एवासत्त्वात् इत्याह विशेषतस्त्वित्यादिना ।अत्र सत्प्रति- पक्षस्थले सामग्री न प्रतिबन्धिकेत्यनुषज्यते तत्सत्त्वे सामग्री- सत्त्वे कार्य्योत्पादस्य दुर्वारत्वात् सामग्र्याः कार्य्योत्पादनियत- त्वात् इति भावः ।

ननु तर्हि परामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथं नोत्पद्यते इत्यत आह किन्त्विति । विरोधिपरामर्शः साध्याभाव- व्याप्यवत्तानिश्चयः तथा अनुमितिप्रतिबन्धकः । ननु यत्र वह्न्य- भावव्याप्यवत्तापरामर्शो वह्न्यभावाभाववान् पक्ष इत्यादिबाधनिश्च यश्च वर्त्तते तत्र वह्निव्याप्यवत्ताज्ञानेन वह्न्यनुमितिर्जन्यते इत्यनु- भवसिद्धः । विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वे तुर्नोपपद्यते इत्यत आह यदि चेति । तत्सत्त्वेऽपि विरोधिपरामर्शसत्त्वेऽपि तत्साध्यबाधावतारे तादृशपरामर्शानुमेयविरोधिकोटेः पक्षे- ऽभावनिश्चयदशायां नानुमितिप्रतिबन्धः न प्रकृतसाध्यानु- मित्यनुत्पादः । अप्रामाण्यग्रहाभावस्येत्यनन्तरं वैशिष्ट्यमित्यनु- षज्यते । तदभावस्य विरोधिकोटिविरहनिश्चयाभावस्य तत्र विरो- धिपरामर्शप्रतिबन्धकतावच्छेदकगर्भे निवेश्यतामिति तत्र विप- रीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटिविरहनिश्चयसत्त्वे तत्परामर्शे भ्रमत्वग्रहानन्तरमेवानुमितिर्नत्वन्यथेति । भ्रम- त्वग्रहाभावनिवेशेनैव उपपत्तौ तादृशग्रहाभाववैशिष्ट्यनिवेशो व्यर्थ इत्यनिर्भरसूचनाय यदि चेत्युक्तम् अप्रामाण्यग्रहाभाववैशि- ष्टस्य दृष्टान्तविधया प्रतिबन्धकतावच्छेदकत्वं दर्शितम् ।

ननु अस्तु विरोधिपरामर्शमात्रं प्रतिबन्धकं तथापि तदघटित- विरोधिसामग्रीकालीनज्ञानस्य फलानुत्पादनियतत्वात्तादृशसा- मग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकत्वं दुरुपपादमेव । एवं सति तथाविधविरोधिपरामर्शकालीनत्वमादायापि दशा-

विशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुपपद्यते एवं इत्यतो वि-
रोधिपरामर्शकालीनत्वमिव बाधादिभ्रमकालीनत्वमादाय सर्वे-
तावतिप्रसङ्गमाह यथा चेति। तथाविधेति भ्रमप्रमासाधारणे-
त्यर्थः। अपीत्यनन्तरं नानुमितिरित्यनुषज्यते तथा च तादृश-
बाधादिकालीनत्वमपि निरुक्तप्रतिबन्धकतावच्छेदकत्ववत्त्वे-
वेति भाव इति। इत्यतः अतिप्रसङ्ग इति बाधादेरनित्यदोषतायाः
केनाप्यनभ्युपगमेन इष्टापत्त्यनवकाशादिति भावः। विरोधि-
परामर्शकालीनत्वमादाय सर्वत्र सत्प्रतिपक्षिते दुष्टत्वं नोप-
पादयितुं शक्यत इत्याह न चेति न हीत्यर्थः। अतीतादाविति।
तथा चातीतादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मतसिद्ध-
सत्प्रतिपक्षितत्वं नोपपद्यत इति भावः। सत्प्रतिपक्षिते सद्धेतौ
विरोधिव्याप्यवत्त्वस्याप्रसिद्धावपि प्रतिबन्धकीभूतभ्रमविषय-
प्रसिद्धेविरुद्धव्याप्त्यादिरेव दोष इति मतं दूषयति। यदपीति
यद्विषयकत्वेनेति तृतीयार्थः। स्वरूपसम्बन्धरूपावच्छेदकत्वं न
तु अनतिरिक्तवृत्तित्वरूपम् तथा सति विरोधिव्याप्त्यादिरूपदोषे-
ऽव्याप्तेः प्रतिबन्धकतायां ज्ञाननिष्ठत्वविशेषणं कामिनीजिज्ञा-
सादिनिष्ठप्रतिबन्धकतावच्छेदकधर्मेऽतिप्रसङ्गवारणाय।

ननु विरोधिकोटिव्याप्यत्वस्य पर्वतो वह्निमान् धूमात् प-
र्वतो न वह्निमान् जलत्वादित्यादौ प्रतिबन्धकीभूतज्ञानविषय-
समवायादिसम्बन्धावच्छिन्नपक्षधर्मतायाश्च प्रकृतहेतावभावात्
कथं तस्य दुष्टत्वम् अत आह तद्वत्त्वमपीति विरोधिव्याप्त्यादि-
मत्त्वमपीत्यर्थः। तज्ज्ञानरूपेति स्वविषयकज्ञानविषयतात्मके-
त्यर्थः सम्बन्धविशेषस्याविवक्षितत्वादिति भावः। तादृशसम्ब-
न्धवत्तां प्रकृतहेतौ उपपादयति तस्येति। विरोधिव्याप्त्यादिज्ञान-
स्येत्यर्थः। समूहालम्बनतयेति। न च एवं क्रमिकपरामर्शद्वयस्थले
सत्प्रतिपक्षानुपपत्तिरिति वाच्यं तत्रापि तादृशव्याप्त्यादिप्रकृत-

हेतुविषयकपरमेश्वरज्ञानादिकमादाय तद्दत्त्वोपपत्तेः । साध्याभाववत्पक्षविषयकत्वेन साध्याभावप्रकारेण पक्षावगाहित्वेन साध्याभाववत्पक्षज्ञानेति साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वविषयकत्वेनेत्यर्थः । मतभेदेन विकल्पः । तस्य तादृशज्ञानस्य अतिव्याप्तेरिति । साध्यवत्यपि पक्षे साध्यवत्यपि सति पक्षस्य साध्यवत्त्वे सत्यपि इति यावत् । पर्वतो वह्निमान् धूमादित्यादौ भ्रमात्मकज्ञाननिष्ठप्रतिबन्धकतावच्छेदकविषयतानिरूपकत्वस्याभावादेः स्वविषयज्ञानविषयत्वादिसम्बन्धेन वैशिष्ट्यस्य हेतौ सत्त्वादिति भावः । इदमुपलक्षणं वह्निमान् धूमादित्यादौ विरोधिपरामर्शशून्यकालेऽपि तद्विषयतद्विरोधिव्याप्त्यादिकमादायापि हेतोर्दुष्टत्वप्रसङ्गो बोध्यः । तत्रापि पक्षांशे विशिष्टविशेषणकसमूहालम्बनज्ञानसम्बन्धेन हेतौ तद्वैशिष्ट्यसम्भवात् ।

अनतिरिक्तवृत्तित्वमेवावच्छेदकत्वं विवक्षणीयमित्यभिप्रायेण बाधभ्रमप्रतिबन्धकतामादाय अतिप्रसङ्गस्योद्धारमाशङ्कते विशिष्टेति । साध्याभावविशिष्टपक्षविषयकत्वमेव प्रतिबन्धकतानतिरिक्तवृत्ति न तु साध्याभावादिविषयकत्वमित्यर्थः । विशिष्टस्य साध्याभावविशिष्टपक्षस्य तत्र बाधस्थले सत्प्रतिपक्षस्थले सर्वत्र तादृशविशिष्टं प्रसिद्धमेवेत्यभिमानः । भ्रमं निराकरोति तत्किमिति । पक्षावृत्तिसाध्यकसत्प्रतिपक्षे साध्याभावव्याप्यविशिष्टपक्षस्य प्रसिद्धत्वात् । सर्वत्रेति सत्प्रतिपक्षे सत्प्रतिपक्षतया भवन्मतसिद्ध इति । तथा चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वं विवक्षितुमशक्यमिति दर्शितातिव्याप्तिर्दुर्वारैवेति । तद्दत्त्वघटकसम्बन्धं वितर्क्यापि दूषयति यथाकथञ्चिदिति । अतिप्रसक्तं सत्त्वं तु साधारणं तथा च पर्वतादेर्वह्न्यादिसत्त्वे साध्ये धूमादौ दुष्टताव्यवहारापत्तिरिति भावः । तादृशतद्वत्त्वस्य धूमादिसत्त्वे तु साधारणत्वं स्फुटयति धूमादेरिति । ज्ञानरूपेण स्वविषयविषयत्वेन

तद्वाश्रयाश्रयत्वादिना स्वाश्रयद्रव्यत्वाद्याश्रयत्वादिना आदिना एककालीनत्वादिपरिग्रहः । व्यभिचारादिमत्त्वात् वह्न्यभाववद्वृत्तित्वादिमत्त्वात् ।

ननु यादृशसम्बन्धावच्छिन्नयत्प्रकारतानिरूपितधर्मिविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वं दुष्टत्वमिति वाच्यम् । एवञ्च स्वरूपसम्बन्धेन साध्याभाववद्वृत्तित्वादिप्रकारतानिरूपितहेतुविशेष्यताशालित्वेन व्यभिचारज्ञानस्य प्रतिबन्धकतया तेन सम्बन्धेन तस्य हेतोरभावात् नातिव्याप्तिरित्याशङ्कां निराकुरुते यादृशेति । सर्वत्र सत्प्रतिपक्षिते इति ह्रदो वह्निमान् धूमवत इत्यादिहेतौ व्याप्यताघटकसम्बन्धेन वह्न्यभावव्याप्यवत्ताया असत्त्वादिति भावः । ह्रदो वह्निमान् धूमादित्यादौ धूमादिरूपहेतौ व्याप्यताघटकसमवायादिसत्त्वेन वह्न्यभावव्याप्यधूमत्वादिमत्तायाः सत्त्वात् सर्वत्रेत्युक्तं क्वचित् सद्धेताविति सद्धेतुतादशायामपि क्वचिदित्यर्थः । पर्वतो वह्निमानित्यादौ विरोधिपरामर्शासमवधानदशायामपि प्रतिबन्धकतावच्छेदकप्रकारताश्रयवह्न्यभावव्याप्यवह्न्यभावादेः तादृशप्रकारतावच्छेदकस्वरूपादिसम्बन्धेन धूमादिवृत्तित्वादिति भावः ।

यत्तु ज्ञानसम्बन्धेन तद्वत्त्वमेव दुष्टत्वं विशिष्टव्यवहाराद्यनुरोधात् । ज्ञानञ्च कदाचिदेव कस्यचित् सम्बन्धः एवञ्च विरोधिव्याप्यादेर्ज्ञानं विरोधिधूमादिपरामर्शदशायाम् एव प्रकृतहेतौ तत्सम्बन्धः । तदेव तत्र दुष्टताव्यवहारात् साध्याभावादेर्ज्ञानञ्च न कदाचिदपि तथा परमेश्वरादिसाधारणं साध्याभावादिविशिष्टपक्षादेर्ज्ञानन्तु सर्वदैवेति । तन्न ह्यस्मदादेरेव सकलाभियुक्तपुरुषसाधारणस्य नियतव्यवहारस्यासिद्धत्वात् वासनाविशेषवतां तादृशव्यवहारस्य विपरीतस्यापि सम्भवात् ज्ञानस्य नियतसम्बन्धत्वासाधकत्वादिति । बाधसत्प्रतिपक्षज्ञानयोः प्रत्यक्षशाब्द-

ऽपि प्रतिबन्धकत्वमभिप्राय बाधसत्प्रतिपक्षयोरनुमितिमात्र-वृत्तिधर्मावच्छिन्न-प्रयोज्यता-निरूपितप्रयोजकताश्रयाभावप्रति-योगिज्ञानविषयत्वरूपं लिङ्गासाधारणदोषत्वं न भवतीति आशिरं मणिकृता तादृशप्रतिबन्धकतायाञ्च युक्तिर्नोक्तेति।

न्यूनतापरिहाराय युक्तिमाह स्थाणुत्वाभावस्येति। स्थाणु-त्वप्रत्यक्षशाब्दयोरिति समानधर्मितावच्छेदककस्य स्थाणुत्वप्रका-रकस्य लौकिकसन्निकर्षाद्यजन्यप्रत्यक्षस्य शाब्दस्य चेत्यर्थः। एवं शाब्दबोधतदभावतदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे नरशिरःकपाले शुचित्वानुमापके न तद्धर्मिकप्राण्यङ्गत्वपराम-र्शेन स्वतः फलद्वारा चागमजन्याशौचबोधविरोधः स्यादित्यर्थः। स चानुभवविरुद्धस्तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौच-ज्ञानस्यानुभवसिद्धत्वादिति भावः। समाधत्ते तत्रेति तादृशा-शौचज्ञानप्राक्काल इत्यर्थः। अनुकूलतर्काभावेन व्याप्तिनिश्चयस्य बलवत्तरागमविरोधे नानुमितेश्चानुत्पत्तेरिति योजना।

एवञ्च वास्तवव्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव विरोधि अपि तु व्याप्यत्वरूपेण अत्र च प्राण्यङ्गत्वस्य ज्ञानेऽपि व्याप्तिग्राहकतर्कविरहेण व्यभिचारशङ्कया शौचव्याप्यत्वेन तज्-ज्ञानं न सम्भवतीति कारणान्तरविरहेण यत्र व्यभिचारशङ्का-विरहस्तत्र कथञ्चित् व्याप्तिग्रहेऽपि गृहीतप्रामाण्यकागमतात्प-र्यविषयविरोधिविपरीतविषयत्वेन तत्राप्रामाण्यं गृह्यते। तथा च तादृशप्राण्यङ्गत्वज्ञानं न शौचानुमितिजनने शाब्दाशौच-ज्ञानप्रतिबन्धे वा प्रभवतीति समुदायार्थः। आगमे प्रामाण्यग्रहः शिष्टपरिग्रहत्वादिनैव भवति। यावच्च तादृशपरामर्शेनाप्रामाण्यं गृह्यते तावन्न भवत्येवागमप्रवृत्तिरिति भावः। यद्वेत्यादिग्रन्थेन बाधादिज्ञानस्यानुमित्यतिरिक्तज्ञानाप्रतिबन्धकत्वं व्यवस्थाप्य बाधादेर्लिङ्गासाधारणदोषत्वमेवोपपादितं तन्न सङ्गच्छते बाधि-

तार्थस्य शाब्दाभ्युपगमेऽनुमितेरपि अनपराधात् तत्राप्रामाण्य-ग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधित्वोपपत्तेरिति अत्र कल्पे ग्रन्थकृतोऽनिर्भरमाह यद्वेत्यादीति ।

ननु बाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षोत्पत्त्या बाधनिश्चयसामान्यस्य प्रतिबन्धकत्वं न सम्भवतीति अनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयस्याच्चतम् अतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य लक्ष्यताप्रयोजकाभिप्रायेण । यद्वेत्यादिग्रन्थस्य बाधलक्ष्यतोपपादकत्वं साधु सङ्गच्छत इत्यत आह प्रत्यक्षं प्रतीति । समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्यानुत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणं शाब्दं प्रतीति तथा च तत्रैव लिङ्गासाधारणदोषत्वव्याघात इति भावः। तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति अन्यथासिद्धत्वादिति। बाधनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दज्ञानानुत्पादकनिर्वाहत्वादिति भावः। तदभावो बाधनिश्चयाभावः तत्र शाब्दबुद्धौ यद्यपि योग्यतासंशयद्वितीयलक्षणे स्मरणाद्यात्मकायोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दधीहेतुत्वस्यावश्यकत्वं तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्वाहादुपनीतभानविशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिर्वाहकत्वासम्भवात् तत्रैव तन्निराकरोति एवमपीति। उपनीतभानविशेषं दोषविशेषाजन्योपनीतभानं तत्त्वेन बाधनिश्चयाद्यभाववत्त्वेन दुर्वारत्वादिति बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्वानुभवसिद्धत्वादिति भावः।

इति हेत्वाभाससामान्यनिरुक्तेः गादाधरी विवृतिः सम्पूर्णा।

# सामान्यनिरुक्तगादाधरीटीकाया वादार्थः ।



प्रकृतपक्षकप्रकृतसाध्यकप्रकृतलिङ्गकानुमितिनिष्ठकार्य्यता-निरूपकसम्बन्धिग्रहनिष्ठ-प्रतिबध्यतानिरूपित-प्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेतुविषयत्वमिति कल्पे पर्वतो वह्निमान् ह्रदश्च तथा इत्यादिसमूहालम्बनानुमितिमादाय पर्वतपक्षक-वह्निसाध्यकधूमलिङ्गकस्थले वह्न्यभाववद्ध्रदादौ अतिव्याप्तिरिति भट्टाचार्य्येणोक्तम्। तत्रेयमाशङ्का। ननु स्वावच्छेदकत्वस्वनि-रूपितकारणतावच्छेदकत्वान्यतरसम्बन्धेन प्रकृतपक्षकप्रकृत-साध्यकप्रकृतलिङ्गकानुमितित्वावच्छिन्नकार्य्यत्वोपलक्षितं यद्-विषयित्वं तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि-यथार्थज्ञानविषयत्वनिवेशान्नैष दोष इति चेन्न। परामर्शाव्यव-हितोत्तरत्वस्य कार्य्यतावच्छेदकत्वे पक्षादिविषयितायाः प्रयो-जनविरहेण कार्य्यतावच्छेदककोटौ अनिवेशकल्पे बाधादेर-संग्रहापत्तेः। एतेन परामर्शजन्यतावच्छेदककोटिप्रविष्टविष-यित्वावच्छिन्नत्वं प्रतिबध्यतायां निवेश्य पूर्वदोषवारणमिति परा-स्तम्। यत्पक्षसाध्यकस्थले एकेनैव लिङ्गेनानुमितिः, तत्र परा-मर्शाव्यवहितोत्तरत्वस्यापि कार्य्यतावच्छेदककोटौ अनिवेशेन व्यभिचारादावव्याप्तेश्च।

न च प्रकृतपक्षसाध्यकानुमितित्वव्यापकं यत्प्रतिबध्यत्वं यच्च प्रकृतपक्षसाध्यकप्रकृतलिङ्गकपरामर्शत्वव्यापकप्रतिबध्यत्वम् ए-तदन्यतरनिरूपितप्रतिबन्धकताशालि-यथार्थज्ञानविषयत्वनिवे-शान्न कोऽपि दोष इति वाच्यम्। व्यापकत्वादेर्द्विधा निवेशे गौरवात्। इत्यालोच्य प्रकृतपक्षसाध्यकसाध्यव्याप्यप्रकारकस-मूहालम्बनानुमितित्वव्यापकत्वं प्रतिबध्यतायां निवेश्य कल्पा-

न्तरमनुसृतं दीधितिकृता। न च तत्कल्पेऽपि वह्निव्याप्याभाववद्ध्रदादावतिव्याप्तिः तस्य हेतुमत्त्वग्रहाविरोधितया स्वरूपासिद्ध्यात्मकत्वादिति वाच्यम्। तस्य व्याप्यत्वासिद्धित्वेन लक्ष्यतयाऽसिद्धिग्रन्थे मथुरानाथेन लिखितत्वादत एव पक्षः साध्यवान् साध्यव्याप्यो हेतुर्हेतुमान् पक्ष इत्याकारकानुमितिः खण्डशो निवेशनीया, अतो न कोऽपि दोष इति प्रायशोऽनुपादेयः, आचार्य्यमते तादृशानुमितेरप्रसिद्धेश्च।

अथ यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वम् अनुमितिप्रतिबन्धकतावच्छेदकं तत्सम्बन्धेन तद्वत्त्वस्य दुष्टत्वव्यवहारनियामकत्वोपगमे धूमत्ववान् पर्वतो वह्निमान् धूमादित्यादौ धूमादेर्दुष्टतानुपपत्त्या न तादृशशङ्कासम्भवः, स्वरूपसम्बन्धेन धूमत्वाभावादेर्धूमादावसत्त्वात्।

न च धूमत्वस्य पर्वतावृत्तित्वप्रकारकज्ञानस्य विरोधितया समवायसम्बन्धावच्छिन्नपर्वतवृत्तित्वादेरभावस्य स्वरूपसम्बन्धेन धूमे सत्त्वेन न दुष्टत्वानुपपत्तिरिति वाच्यम्। तावतापि रूपत्ववान् पर्वतो वह्निमान् तद्रूपादित्यादौ अव्याप्तिः। यदि तत्र रूपत्वनिष्ठाधेयतायां पर्वतनिरूपितत्वाभावज्ञानस्यापि प्रतिबन्धकत्वात् तमादाय हेतोर्दुष्टत्वोपपत्तिः, तदा पर्वतनिरूपिताधेयत्वनिरूपिताधेयत्ववान् पर्वतो वह्निमान् पर्वतनिरूपिताधेयत्वात् इत्यादौ हेतोर्दुष्टत्वानुपपत्तिः, तत्र निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशपक्षतावच्छेदकाभावस्य पक्षतावच्छेदकनिष्ठनिरूपकत्वसम्बन्धावच्छिन्नपर्वतवृत्तित्वाभावस्य तादृशपक्षतावच्छेदकनिष्ठाधेयतायां पक्षनिरूपितत्वाभावस्य च प्रकृतहेतोरसत्त्वात्।

न च तत्रापि पक्षनिष्ठाधारतायां पक्षतावच्छेदकनिरूपितत्वाभावस्य तथात्वात् तद्वत्त्वस्य हेतौ सत्त्वात् नानुपपत्तिरिति

वाच्यम्। तावतापि पर्वततादृशाधेयत्वान्यतरस्य पक्षतावच्छेदकस्थले प्रकृतहेतौ तादृशान्यतरनिरूपितत्वाभावासत्त्वात् अनुपपत्तेरिति चेन्न। रूपत्वाभावव्याप्यः पर्वतवृत्तिरिति ज्ञानप्रकारतापन्नपर्वतवृत्तित्वमादाय तद्रूपस्य दुष्टत्वसम्भवात्। एवं तादृशाधेयत्वनिरूपिताधेयत्वाभावव्याप्यः पर्वतवृत्तिरिति ज्ञानप्रकारतापन्नपर्वतवृत्तित्वमादाय तत्र दुष्टत्वसम्भवात्।

न चैवं वह्न्यभावव्याप्यः पर्वतवृत्तिरिति पक्षविशेषणकज्ञानमादायापि सद्धेतोर्दुष्टत्वप्रसक्तिरिति वाच्यम्। तावता बाधभ्रमस्थले पक्षविशेष्यकभ्रममादायैव अतिव्याप्तिर्भवतीति अणुरपि विशेषोऽध्यवसायकर इति न्यायेन तथोक्तिसम्भवात्। परे तु तादृशतादृशदुष्टस्थले पक्षतावच्छेदकविशिष्टे पक्षनिष्ठभेदप्रतियोगित्वबुद्धेरपि पक्षतावच्छेदकवत्ताग्रहविरोधितया तादृशप्रतियोगिवत्त्वमादाय दुष्टत्वसम्भवान्नानुपपत्तिरिति। परन्तु ईदृशरीत्या साध्यवान् पक्षनिष्ठभेदप्रतियोगीति भ्रममादाय पक्षविशेषणकज्ञानमादाय दोषसम्भवेऽपि अणुरपीत्यादिन्यायेन प्रसिद्धबाधस्थले न सम्भवतीति बोध्यम्।

केचित्तु सद्धेतुस्थले असद्धेतुमात्रे च साध्याभावत्वेन गगनाभावादेरपि भानसम्भवेन असद्धेतोर्गगनाभावरूपप्रकारवत्त्वमादाय दुष्टत्वसम्भवे ईदृशकुसृष्टिर्वृथेति पर्वतप्रकारकज्ञानमादाय स्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन कस्यापि धूमेऽसत्त्वेन न पक्षविशेषणकभ्रममादाय दोषप्रसक्तिरिति। भट्टाचार्याननुयायिनस्तु पक्षविशेष्यकभ्रमविषये इत्यत्र एवकारः प्रामादिक एव। एवञ्च आदिपदग्राह्यपक्षविशेषणकभ्रमविषयोऽपीति दीधितिकारसम्मतः। अतएव हेतुविशेष्यकव्यभिचारभ्रमविषयस्य संग्रहः। एवञ्च भ्रमपदमपि निश्चयसामान्यपरम् आदिपदेनैव प्रमाविषयसाध्याभावस्य संग्रहादिति वदन्ति।

यद्धर्मविशिष्टविषयकत्वेन इत्यस्य यद्रूपावच्छिन्नविषयक-त्वेनेत्यर्थः । अथात्र यद्रूपपदेन दोषतावच्छेदकमुपादेयम् । तच्च यदि वह्न्यभावह्रदत्वोभयरूपं तदा एकत्र द्वयमितिरीत्या ह्रद-त्ववह्न्यभावोभयावगाहिज्ञाने वह्न्यभावधर्मितावच्छेदकीभूत-ह्रदत्वावगाहिज्ञाने च यद्रूपावच्छिन्नविषयकत्वसत्त्वात् । तत्र च प्रकृतानुमितिप्रतिबन्धकत्वविरहादसम्भवः । यदि च सामा-नाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वरूपं तत् तथाहि ह्रदो वह्न्यभाववान् इतिज्ञाने विशिष्टानुयोगिकवैशिष्ट्याव-गाहितया ह्रदत्वविशिष्टे वह्न्यभावभाने सामानाधिकरण्य-सम्बन्धेन ह्रदत्वांशेऽपि वह्न्यभावस्य भानं इति यद्रूपावच्छिन्न-विषयकत्वं तत्रात्यतमिति ब्रूयात्, तदा सामानाधिकरण्यसम्ब-न्धेन वह्न्यभावविशिष्टह्रदत्वावगाहिवह्न्यभाववत्त्वानितिज्ञाने यद्रूपावच्छिन्नविषयकत्वसत्त्वेन तत्रच प्रकृतानुमितिप्रतिबन्ध-कताविरहादसम्भव इति चेत् । अत्र केचित् ह्रदत्वावच्छिन्नानु-योगिताकत्वविशिष्टविशेषणताविशेषेण वह्न्यभावो ह्रदत्वं द्वय-मेव यद्रूपपदेनोपादेयम् तद्धर्मविशिष्टानुयोगिकवैशिष्ट्यावगाहि-न्येव तद्धर्मावच्छिन्नानुयोगिताकत्वं संसर्गांशे भासते नियमादिति न कोऽपि दोषः ।

परे तु यद्रूपपदेन सामानाधिकरण्यसम्बन्धेन वह्न्यभाव-विशिष्टह्रदत्वमेवोपादेयं यद्रूपावच्छिन्नविषयकत्वञ्च यद्रूपनिष्ठ-विशेष्यतानिरूपितप्रकारतावच्छेदकप्रकारतानिरूपितं यत् यद्रूपावच्छिन्नविषयत्वं तन्निरूपकत्वरूपमिह विवक्षितम् । वह्न्यभाववत्त्वानिति ज्ञानीयं यद्वह्न्यभाववद्ह्रदत्वावच्छिन्न-विषयत्वं तस्य न ह्रदत्वनिष्ठविशेष्यतानिरूपितप्रकारतावच्छे-दकप्रकारतानिरूपितत्वं पारतन्त्र्यीयप्रकारतयोरेवावच्छेद्याव-च्छेदकभावस्वीकारात् इति तमादाय न दोषः । नचैवं वह्न्य-

भाववत्त्वान् प्रमेय इति ह्रदत्वविशिष्टानुयोगिकप्रमेयत्ववैशिष्ट्या-वगाहिज्ञानीयं यद् वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयत्वं तस्य तादृशप्रकारतानिरूपितत्वसम्भव इति वाच्यम्। अव्यापकी-भूतविषयितागून्यत्वदलेनैव तज्ज्ञानवारणात्।

वस्तुतस्तु यद्रूपावच्छिन्नविषयकत्वपदेन यद्रूपावच्छिन्न-पर्य्याप्तिकावच्छेदकताकविषयित्वं विवक्षणीयम्। यद्रूपपदेनेह ह्रदो वह्न्यभाववान् इति ज्ञानीयविषयितानिरूपकतावच्छेद-कतापर्य्याप्त्यनुयोगितावच्छेदकं वह्न्यभाववद्ह्रदत्वघटकवृत्ति-समुदायत्वमुपादेयम्। तद्रूपवत्त्वमित्यनेन च तद्रूपावच्छिन्न-पर्य्याप्तिकावच्छेदकताकप्रतियोगितावच्छेदकवत्त्वमेव विवक्ष-णीयम्। वह्न्यभावधर्म्मितावच्छेदकह्रदत्वावगाहिज्ञाने तादृश-समुदायत्वावच्छिन्नपर्य्याप्तिकावच्छेदकविषयित्वं नास्ति। ह्रदो वह्न्यभाववानिति ज्ञानीयविषयितानिरूपकतावच्छेदकतापर्य्या-प्त्यनुयोगितावच्छेदकवह्न्यभाववान् ह्रद इति ज्ञानीयविषयता-निरूपकतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकयोर्धर्म्मिविशेषवि-षयत्वरूपयोर्वैलक्षण्यात् जातिमान् वह्न्यभाववान् इति ज्ञानीय-विषयतानिरूपकतावच्छेदकत्वस्य वह्न्यभाववद्ह्रदत्वघटकेतरा-वृत्तित्वविशिष्टस्य पर्य्याप्त्यनुयोगितावच्छेदकं तादृशसमुदायत्व-मेव नातोऽव्यापकीभूतविषयितागून्यदलवैयर्थ्यमिति सर्वं चतुर-स्रम्। इति यद्रूपपदवादार्थः।

स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयतेति गादाधरी। स्वावच्छिन्नाभाववद्वृत्तित्वस्वनिरूपितत्वैतदुभयसम्बन्धेन प्रका-रताविशिष्टविषयत्वानिरूपकत्वमात्रनिवेशे विशिष्टसत्तावान् गुण इति ज्ञानस्यापि प्रमात्वापत्तिः। स्वावच्छेदकावच्छिन्ना-भाववद्वृत्तित्वस्वनिरूपितत्वैतदुभयसम्बन्धेन वैशिष्ट्यनिवेशे गुणो द्रव्यमित्याकारकस्वरूपस्रो द्रव्यत्वप्रकारकभ्रमस्य प्रमात्वा-

पत्तिः । अतः स्वावच्छिन्नाभाववद्वृत्तित्वस्वनिरूपितत्वैतदु-भयसम्बन्धावच्छिन्नस्वाश्रयत्वस्वावच्छेदकावच्छिन्नाभाववद्वृत्तित्व स्वनिरूपितत्वैतदुभयसम्बन्धावच्छिन्नस्वाश्रयत्वैतदन्यतरसम्बन्धेन प्रकारताविशिष्टविषयत्वानिरूपकत्वस्य निवेशेऽपि विशिष्ट-सत्तावद् द्रव्यमिति ज्ञानस्य विशिष्टसत्तात्वविशिष्टवैशिष्ट्यावगा-हितया तादृशप्रकारतावच्छेदकविशिष्टनिरूपितसमवायस्य प्रकारत्वावच्छिन्नाप्रतियोगिकत्वेन तादृशसम्बन्धेन तादृशप्रका-रत्वावच्छिन्नाभाववद्वृत्तित्वस्वनिरूपकत्वैतदुभयसम्बन्धेन प्रका-रताविशिष्टविषयतावत्त्वात् प्रामाण्यानुपपत्तिः ।

एवं घट इत्याकारज्ञानधर्म्मिकविषयितया घटवानिति ज्ञानस्य प्रामाण्यानुपपत्तिः । घट इति ज्ञाने घटत्वेनैव घटस्य सत्त्वात् प्रकारत्वेन घटस्यासत्त्वात् । एवं प्रकार इत्याकारक-प्रकारत्वेन घटत्वावगाहिज्ञानधर्म्मिकस्य इदं ज्ञानं विषयितया घट इतिज्ञानस्यापि प्रमात्वापत्तिः । घट इति धर्म्मीभूतज्ञाते विषयितया प्रकारत्वावच्छिन्नाभावासत्त्वादिति चेन्न । स्वावच्छेद-कसम्बन्धावच्छिन्न स्वावच्छेदकावच्छिन्नाभाववद्वृत्तित्वस्वनिरू-पितत्वैतदुभयसम्बन्धेन प्रकारताविशिष्ट विषयत्वानिरूपकत्वे सति स्वावच्छिन्नाभाववद्वृत्तित्वस्वनिरूपितत्वैतदुभयसम्बन्धेन विषयित्वसम्बन्धानवच्छिन्न निरवच्छिन्न-प्रकारताविशिष्ट-विषय-त्वानिरूपकत्वे सति स्वाश्रयनिष्ठनिरवच्छिन्नस्वावच्छेदकसम्ब-न्धावच्छिन्ननिरूपकताकाधिकरणत्वाभाव-वन्निष्ठत्वस्वनिरूपित-त्वैतदुभयसम्बन्धेन निरवच्छिन्नप्रकारताविशिष्टविषयत्वानिरू-पकत्वमेव प्रमात्वमिति निष्कर्षः ।

यादृशविशिष्टविषयनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकता-नतिरिक्तवृत्ति तादृशविशिष्टत्वमिति भट्टाचार्य्येण व्याख्यातम् । अत्रायमनुपपत्तिः । यादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानु-

मित्यवृत्ति तादृशत्वमित्यस्यैव सम्यक्त्वे अनतिरिक्तवृत्तित्वरूपा-वच्छेदकत्वप्रवेशो व्यर्थ इति चेन्न। पर्वतस्तद्वह्न्यभाववान् वह्न्यभावव्याप्यादित्यत्र वह्निमत्पर्वते अतिव्याप्तिः। वह्निमत्-पर्वतविषयकनिश्चयत्वस्य तादृशसमूहालम्बनात्मकानुमित्या सह आहार्य्यत्वेन एकज्ञानासम्भवात् अनतिरिक्तवृत्तित्वरूपावच्छेद-कत्वनिवेशे वह्निमत्पर्वतविषयकनिश्चयत्वस्य अनुमितिप्रतिबन्ध-कतानतिरिक्तवृत्तित्वविरहान्नातिव्याप्तिरिति ध्येयम्।

अथ यादृशविशिष्टविषयकनिश्चय-विशिष्टयादृशविशिष्टविष-यकनिश्चयत्वम् अनुमित्यवृत्ति तादृशविशिष्टद्वयाघटितत्वनिवेशे-नैव सामञ्जस्ये कृतं गुरुतरनिवेशेनेति। न च वह्न्यभाववद्ह्रद-त्वादिविशिष्टविषयकनिश्चयविशिष्टवह्न्यभाववद्ह्रदत्वविशिष्टविष-यकनिश्चयत्वस्य प्रकृतानुमित्यवृत्तितया बाधादसम्भव इति वाच्यम्। ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकविषयि-ताशून्यत्वनिवेशेनैव असम्भववारणसम्भवादिति। न च ह्रदो वह्निमान् वह्निव्याप्यधूमवान् जलवांश्च इति समूहालम्बनानु-मित्युत्तरं जलवान् वह्न्यभाववान् इति ज्ञानोत्पत्तौ बाधका-भावेन ह्रदो वह्निमान् वह्निव्याप्यधूमवान् जलवान् वह्न्य-भाववान् इत्यनन्तरञ्च जलवान् ह्रद इति ज्ञानोत्पत्तौ बाधकाभावे, न च वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदे अति-व्याप्तिरिति वाच्यम्। यादृशविशिष्टपदेन वह्न्यभाववज्जल-वद्वृत्तिजलवद्ह्रदादिकमादाय तत्रातिव्याप्तिवारणसम्भवादिति चेदत्राहुः।

ह्रदः प्रतियोगित्वाभावव्याप्यवज्जलकालीनवह्निमान् जला-दित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्ये ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलरूपा-साधारण्ये च यादृशविशिष्टपदेन असाधारण्यमादायाव्याप्तिः,

अतोऽनुमित्यवृत्तित्वमुपेक्ष्य अनतिरिक्तवृत्तित्वनिवेशः। अतएव निश्चयत्वविशिष्टनिश्चयत्वे अनुमित्यवृत्तित्वनिवेशेनापि सामञ्जस्ये गुरुतरनिवेशो व्यर्थ इति परास्तम्। यादृशाङ्कुरविशेषविषयकसाध्यकस्थले असाधारण्यघटकपदार्थविषयकप्रकृतानुमितिर्न जाता तादृशस्थलीयासाधारण्येऽव्याप्तेश्च। अथ यादृशविशिष्टविषयकनिश्चयत्वविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्राक्क्षणज्ञानावृत्तितादृशविशिष्टाघटितत्वमित्यस्यैव सम्यक्त्वे अनतिरिक्तवृत्तित्वनिवेशो व्यर्थ इति चेत् ह्रदो वह्निमान् जलात् इत्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्येऽव्याप्तिः, तादृशासाधारण्यविषयकज्ञानस्य अनुमितिप्राक्क्षणे कारणविरहेणानुत्पत्त्या तादृशासाधारण्यविषयकनिश्चयत्वस्य तादृशानुमितिप्राक्क्षणावृत्तित्वादिति। एवं प्राक्क्षणघटितत्वेन तदपेक्षया लाघवानवकाशाच्च।

अथ विशिष्टान्तराघटितस्य स्वावच्छिन्नाविषयकप्रतीतिविषयता-निरूपकतावच्छेदकीभूतानुमिति-प्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकीभूतं यद्रूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमित्यर्थकत्वं भट्टाचार्य्येणोक्तम्। अत्रेयमनुपपत्तिः। स्वावच्छिन्नाविषयकप्रतीतिविषयतानिरूपकतावच्छेदकीभूतानुमित्यवृत्तिविषयतानिरूपकतावच्छेदकीभूतं यद्रूपं तदवच्छिन्नाघटितत्वनिवेशेनैव सामञ्जस्ये कृतं गुरुतरनिवेशेनेति चेन्न। पर्वतः कपिलवह्न्यभाववान् वह्न्यभावव्याप्यात् इत्यत्र कपिलवह्निमत्पर्वतरूपबाधेऽव्याप्तिः। स्वावच्छिन्नाविषयकप्रतीतिविषयितानिरूपकतावच्छेदकीभूतं यद्वह्निमत् पर्वतत्वं तदपि प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकमिति तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य कपिलवह्निमत्पर्वतादावसत्त्वात्। तथा च अनुमितिप्रतिबन्धकतान-

तिरिक्तवृत्तित्वनिवेशे च वह्निमत्पर्वतत्वस्य प्रतिबन्धकतामति-रिक्तवृत्तित्वविरहात् तज्ज्ञानस्य तादृशसमूहालम्बनानुमित्य-प्रतिबन्धकत्वान्नातिव्याप्तिरिति ध्येयम्।

अथ स्वानवच्छिन्नप्रकारतावच्छेदकत्वरूपतदितरत्वनिवेशे-नैव सामञ्जस्ये स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वप-र्य्यन्तनिवेशनं, भट्टाचार्य्यस्य सन्दर्भविरुद्धमिति चेन्न। यत्र स्थल-विशेषे दोषविषयकज्ञानं नियताङ्कुरविषयकं सदेव जनितं न तु स्वतन्त्रेण तत्राङ्कुरविशेषस्य च ज्ञानं दोषविषयकं सदेव जनितं न तु स्वतन्त्रेण च तत्र स्वानवच्छिन्नप्रकारतावच्छेदकं यदङ्कुरत्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छे-दकेऽभावात् तादृशदोषेऽव्याप्तिः, अतः स्वानवच्छिन्नप्रकारताव-च्छेदकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकप्रतीतिविषयतानिरूपकता-वच्छेदकत्वपर्य्यन्तानुधावनं जगदीशेन तादृशस्थलमस्वीकृत्य तादृशनिवेशनं कृतमिति सुधीभिर्भाव्यम्। इदन्तु चिन्त्यम्। स्वानवच्छिन्नप्रकारतावच्छेदकं यत् तादृशं तदनवच्छिन्नप्रका-रतावच्छेदकत्वस्य विशिष्टान्तराघटितत्वार्थकत्वे न दोष इति। अत्र कश्चित् व्यभिचारकालीनकृदत्वविशिष्टेऽतिव्याप्तिः। वस्तु-तस्तु स्वत्वस्य अननुगतत्वेन स्वानवच्छिन्नप्रकारता इत्यत्र स्वाव-च्छिन्ना या या प्रकारता तत्तद्भेदकूटवत्प्रकारता इत्यर्थो वाच्यः। एवञ्च एकज्ञानीयनानाप्रकारताभेदनिवेशापेक्षया लाघ-वात् स्वावच्छिन्नविषयकज्ञानव्यक्तिभेदनिवेश इति।

अथ अनुमितिप्रतिबन्धकतानवच्छेदकविषयताशून्यज्ञान-वृत्ति यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकमनुमितिप्रति-बन्धकत्वं तद्रूपवत्त्वमित्युक्तावेव सामञ्जस्ये कृतं विशिष्टद्वयाघ-टितत्वाव्यापकीभूतविषयिताशून्यत्वनिवेशेनेति। न चैवं वह्न्य-भावाद्येकदेशेऽतिव्याप्तिः वह्न्यभाववान् ह्रद इत्यादिज्ञानीय-

न्न्यभावत्वावच्छिन्नविषयिताया एव तादृशप्रतिबन्धकतानव-च्छेदकविषयिताशून्यज्ञानीयत्वेन तस्यास्तादृशप्रतिबन्धकतान-तिरिक्तवृत्तित्वादिति वाच्यम्। वह्न्यभावकालीनजलवान् वह्न्य-भाववान् तादृशवह्न्यभाववांश्च ह्रद इत्यादिज्ञानस्यापि अनु-मितिप्रतिबन्धकतया तादृशप्रतिबन्धकतानवच्छेदकविषयिता-शून्यवह्न्यभावकालीनजलवान् वह्न्यभाववान् इत्यादिज्ञानमपि वह्न्यभावत्वाद्यवच्छिन्नविषयितायाः सत्त्वेन अनुमितिप्रतिबन्ध-कतातिरिक्तवृत्तित्वादिति चेन्न। वह्न्यभाववज्जलवत्कालीन-त्वाभाववद्ध्रदपक्षकवह्निसाध्यकस्थले वह्न्यभाववज्जलवत्कालीन-जलवद्ध्रदादावतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वस्य एकत्र द्वयमितिरीत्या वह्न्यभावधूमाभाववद्ध्रदादावतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वस्य सार्थक्यात्।

न च यत्किञ्चित्प्रतिबन्धकतानवच्छेदकविषयिताशून्यत्व-विवक्षणेनैव उक्तातिव्याप्तिद्वयस्य वारणं सम्भवतीति वाच्यम्। एवमपि ह्रदो वह्निमान् धूमात् इत्यादौ वह्न्यभाववज्जलवद्वृत्ति-जलवद्ध्रदादावतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वस्य मेयत्व-विशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तिवारणाय च विशिष्टान्तराघ-टितत्वस्यावश्यकत्वात्। वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वाव-च्छिन्नविषयितामात्रस्य मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्न-विषयितामात्रस्य च वह्न्यभाववज्जलवद्वृत्तिजलवान् धूमाभाव-वान् तादृशजलवांश्च ह्रदः मेयत्वविशिष्टवह्न्यभाववान् धूमाभा-ववान् मेयत्वविशिष्टवह्न्यभाववांश्च ह्रद इत्यादिज्ञाननिष्ठं यद-नुमितिप्रतिबन्धकत्वं तदनवच्छेदकविषयिताशून्यज्ञानीयत्वात्।

न च यत्प्रतिबन्धकतानतिरिक्तवृत्तित्वं तत्प्रतिबन्धकतानव-च्छेदकविषयिताशून्यत्वविवक्षणात् नोक्तदोष इति वाच्यम्। तथा सति गोत्वाभावो गोत्वाभाववान् इत्यादौ बाधप्रतिबन्धक-

तामादाय बाधभ्रमविषये गोत्वाभावे अतिव्याप्त्यापत्तेः। न च स्वानवच्छेदकविषयिताशून्यज्ञानीयविषयितावच्छेदक-यद्रूपवाच्छिन्नविषयित्वव्यापकं यत् स्वं तद्रूपवत्त्वमित्युक्तौ नोक्तदोषः, उक्तबाधप्रतिबन्धकतानवच्छेदकविषयितावच्छेदकं यद्गोत्वाभावत्वं तदवच्छिन्नविषयित्वाव्यापकत्वात् तत्प्रतिबन्धकत्वस्येति स्वपदम् अनुमितिप्रतिबन्धकतापरमिति वाच्यम्। एवमपि ह्रदो वह्निमान् इत्यादौ एकत्र द्वयमितिरीत्या वह्न्यभाववद्वह्न्यभाववद्ध्रदे बाधप्रतिबन्धकतामादाय अतिव्याप्त्यापत्तेरिति। अत एव स्वानवच्छेदकविषयताशून्यत्वरूपोभयसम्बन्धेन यद्रूपावच्छिन्नविषयताव्यापकमनुमितिप्रतिबन्धकत्वमित्युक्ताविव सामञ्जस्ये विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वनिवेशो व्यर्थ इति परास्तम्। वस्तुतो निरवच्छिन्नवह्न्यभाववद्ध्रदस्य दोषत्वेन तत्राव्याप्तेर्न तादृशः कोऽपि प्रकारः साधुरिति चिन्त्यम्।

अथ तादृशसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाव्यापकीभूतप्रतिबन्धकताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्युक्तौ नोक्तदोषः। उक्तबाधप्रतिबन्धकतानवच्छेदकत्वस्यैव सम्यक्त्वे व्यर्थं विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वविशेषणेनेति। नच सर्वस्या एव प्रतिबन्धकताया ज्ञानभेदेन भिन्नतया तादृशप्रतिबन्धकत्वाव्यापकत्वेन बाधप्रभृतावसम्भव इति वाच्यम्। अव्यापकप्रतिबन्धकतापदेन व्यापकत्वसम्बन्धेन तादृशप्रतिबन्धकताविशिष्टान्यप्रतिबन्धकत्वस्य विवक्षितत्वात्।

नच एवमपि वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिः वह्न्यभाववज्जलवद्वृत्तिजलाभावात्मकविशेषापरबुद्धेः प्रतिबन्धकतायाः साध्यवत्ताबुद्धिप्रतिबन्धकताव्यापकत्वेऽपि वह्न्यभाववज्जलवद्वृत्तिजलवान् धूमाभाववान् तादृशजलवांश्च ह्रद

इत्याकारकज्ञानीयहेतुमत्ताबुद्धिप्रतिबन्धकताव्यापकत्वेन तादृश-विशिष्टविषयकनिश्चयस्य तादृशाव्यापकप्रतिबन्धकताशून्यत्वात् इति वाच्यम् । व्यापकतासम्बन्धेन स्वविशिष्टान्यप्रतिबन्धकताशू-न्यज्ञानीययद्रूपावच्छिन्नविषयिताव्यापकं स्वं तद्रूपावच्छिन्नत्वस्य विवक्षितत्वात् । अत्र स्वपदं अनुमितित्वव्यापकप्रतिबध्यता-निरूपितप्रतिबन्धकतापरं तथाचोक्तविशिष्टविषयकनिश्चयस्य हेतुमत्ताज्ञान-प्रतिबन्धकताविशिष्टान्य-प्रतिबन्धकता-शून्यत्वेऽपि तादृशप्रतिबन्धकताया उक्तस्वपदार्थाभिमतसाध्यवत्ताज्ञानप्रति-बन्धकत्वाव्यापकत्वान्नातिव्याप्तिः ।

एतेन मेयत्ववाच्यत्वोभयवद्धूमाभाववद्वृत्तित्वाभाववद्वह्निप-क्षकधूमसाध्यकवह्निहेतुकस्थले मेयत्वविशिष्टव्यभिचारेऽति-व्याप्तिः तादृशव्यभिचारनिश्चयवृत्तिप्रतिबन्धकतामात्रस्यैव आश्र-य सिद्धिप्रतिबन्धकताव्यापकत्वात् । एवं ह्रदो वह्निमान् वह्न्य-भाववज्जलवद्वृत्तिमेयत्वविशिष्टजलाभावात् इत्यत्र वह्न्यभाववज्ज-लादिमद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः तादृशह्रदविषयकनिश्चयनिष्ठ-प्रतिबन्धकतामात्रस्यैव स्वरूपासिद्धिप्रतिबन्धकताव्यापकत्वात् अतो नोक्तकल्पः साधीयानित्यपि परास्तम् ।

न च धूमव्यभिचारिवह्निमदादावतिव्याप्तिः तज्ज्ञानस्य निर्धर्मितावच्छेदकतया तत्र व्याप्तिज्ञानप्रतिबन्धकत्वाव्यापक-प्रतिबन्धकताविरहादिति वाच्यम् । तत्रापि वह्निरवृत्तिरित्या-कारक-ज्ञान-प्रतिबन्धकतायास्तादृश-प्रतिबन्धकत्वाव्यापिकायाः सत्त्वेनातिव्याप्तिविरहादिति । मैवम् । द्रव्यं समवेतात् इत्यादौ द्रव्यत्वाभाववद्वृत्तिसमवेतवदादौ अतिव्याप्त्यापत्तेः । द्रव्यत्वाभाव-वद्वृत्तिसमवेतवदित्याद्याकारकज्ञानस्य व्याप्तिज्ञानप्रतिबन्धक-त्वाव्यापकीभूतप्रतिबन्धकताशून्यत्वादवृत्तिसमवेतमित्यादिज्ञान-स्यापि आहार्यत्वेनाप्रतिबध्यत्वात् । न च द्रव्यत्वाभाववदवृत्ति-

समवेतवदिति ज्ञानं जायतामित्याकारकेच्छाप्रतिबन्धकतामादाय न तत्रातिव्याप्तिरिति वाच्यम्। इच्छात्वावच्छिन्नप्रतिबध्यता-निरूपितप्रतिबन्धकताया एव निवेशनीयत्वात्। अन्यथा बाधा-दिविषयकतत्तज्ज्ञानान्यज्ञानं जायताम् इत्याकारकेच्छाप्रतिब-न्धकतामादाय असम्भवापत्तेरिति ध्येयम्। निरवच्छिन्नवह्न्यभाव-वद्ध्रदस्य दोषत्वे तत्राव्याप्तेर्दुर्धरत्वापत्तेरिति तु नव्याः। केचित्तु, व्यापकसामानाधिकरण्यव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तत्राव्या-प्तेस्तज्ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृश-प्रतिबन्धकत्वाव्यापकीभूतप्रतिहेतुव्यापकसाध्याभावसमानाधि-करणहेत्वभाव-रूपविशेषाभाववत्ताज्ञानप्रतिबन्धकताशून्यत्वाभा-वादित्याहुः।

अथ यद्रूपावच्छिन्नविषयित्वसमानाधिकरणाभावप्रतियोगि-तावच्छेदकं यद्रूपावच्छिन्नविषयितात्वं तद्रूपावच्छिन्नविषयिता-शून्यत्वनिवेशे अभावत्वेन ह्रदत्वावगाहिनः, अभाववान् वह्न्यभा-ववान्, इत्यादिज्ञानवारणमशक्यम्। अभावत्वावच्छिन्नविषयिता-त्वस्य वह्न्यभाववद्ध्रदविषयित्वसमानाधिकरणाभावप्रतियोगिता-नवच्छेदकत्वात् यद्रूपपदेन अभावत्वस्य धर्त्तुमशक्यत्वात् वह्न्य-भाववदभावत्वस्य धर्त्तुं शक्यत्वेऽपि तद्रूपावच्छिन्नविषयिताशून्य-त्वस्य तादृशभ्रमे सत्त्वात्। नच यद्रूपावच्छिन्नविषयितानिरूपि-तयद्रूपावच्छिन्नविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिक-रणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयितानिरूपित-तद्रूपावच्छिन्नविषयिताशून्यत्वं निवेश्यम्, तथाच अभावत्वावच्छि-न्नविषयितानिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वं त-थेति। तादृशविषयिताशून्यत्वं न तत्रास्तीतिवाच्यम्। अभावत्वा-वच्छिन्नविषयितानिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताया अपि वह्न्यभाववद्ध्रदत्वविशिष्टविषयित्वाव्यापकत्वाभावात्।

न च यद्रूपमात्रावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्न-विषयितात्वं तादृशावच्छेदकं तद्रूपमात्रावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं वक्तव्यं तथा च अभावत्व-मात्रावच्छिन्न विषयितानिरूपितवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयिताया अव्यापकत्वात् तच्छून्यत्वाभावाद्वासङ्गतिरिति वाच्यम् । तथापि वह्न्यभावत्वेन ह्रदत्वावगाहिभ्रमवारणासम्भवात् न च भ्रमान्यत्वं विशेषणं देयमिति वाच्यम् । एतत्कल्पे तस्यानुपादेयत्वात् ।

न च विशेष्यदले यद्रूपावच्छिन्नविषयित्वव्यापकमित्यत्र यद्रूपनिष्ठावच्छेदकत्वं यद्रूपावृत्तिधर्मानवच्छिन्नं ग्राह्यम् तथा च तस्याव्यापकीभूतविषयिताशून्यत्वेऽपि तावतैव तद्वारणमिति वाच्यम् । तथा सति प्रकारीभूतवह्नित्वस्याभावत्वेन ज्ञानवारणासम्भवात् । न च यादृशविषयितात्वं तादृशाभावप्रतियोगितावच्छेदकं तादृशविषयितात्वावच्छिन्नाभाववत्त्वं विशेषणं देयमिति वाच्यम् । वह्नित्वावच्छिन्नविषयितानिरूपिताभावत्वावच्छिन्नविषयितानिरूपितह्रदत्वावच्छिन्नविषयितानिरूपिताभावत्वावच्छिन्नविषयितात्वादिरूपस्य तादृशविषयितात्वस्यापि तादृशविशिष्टविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावादिति चेन्न, तत्तज्ज्ञानान्यत्वेन स्वतन्त्रविशेषणस्यापि देयत्वात् । स्वाभाववन्निष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताकत्वस्वाश्रयनिष्ठविशेष्यतानिरूपित-स्वनिष्ठप्रकारकत्वोभयसम्बन्धेन यत् किञ्चिद्धर्मवज्ज्ञानान्यत्वं देयमिति कथञ्चिदनुगतोक्तिसम्भवाच्च ।

स्वनिरूपकतावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्य्याप्त्यवच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकीभूतविषयिताशून्यज्ञानीयत्वसम्बन्धेन यद्रूपावच्छिन्न-

विषयिताविशिष्टं यत्किञ्चिद्विषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपवत्त्वमिति पर्य्यवसितोऽर्थ इत्यपि केचित्। वस्तुतः अथैवं जातिमान् वह्न्यभाववान् इत्यादिग्रन्थ एव आपाततः विषयितासम्बन्धेन यादृशविशिष्टव्यापकं प्रतिबन्धकत्वं तादृशत्वमित्येव वक्तव्यम्। यत्र स्वरूपतोऽस्वरूपतो वा यादृशविशेषणघटितयादृशविशिष्टो दोषः, तत्र तादृशविशिष्टनिरूपितविषयिताया एव विशिष्टस्य संसर्गता स्वीक्रियते न त्वन्यविधायाः, इति जातिमद्वह्न्यभाववद्ध्रदरूपविशिष्टनिरूपितविषयितायाः स्वरूपतो ह्रदत्वघटितविशिष्टसंसर्गताविरहेण असम्भासम्भवात् परन्तु यादृशत्वमनुगतमिति।

एतेन अभावत्वेन ह्रदत्वावगाहिज्ञानवारणाय यथार्थपदसार्थक्यसम्भवेन दीधितिकृतां यथार्थपदाघटितद्वितीयलक्षणाभासस्य विरोध इति परास्तम्। अतएव अनुमितिग्रन्थे परामर्शग्रन्थे च भट्टाचार्य्येण विशिष्टव्याप्तिप्रसिद्धस्थले खण्डशो विषयितामनुपादाय विषयितासम्बन्धेन विशिष्टविषयस्यैव ज्ञाने निवेशः कृतः।

अथ यद्रूपावच्छिन्नविषयितासामान्यं अनुमितिप्रतिबन्धकतावच्छेदकं इत्यत्र सामान्यपदं व्यर्थम्। ह्रदो न वह्निमान् इत्यादिज्ञानीयह्रदत्वावच्छिन्नयत्किञ्चिद्विषयितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वेऽपि तज्ज्ञानस्य ह्रदत्वविशिष्टविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् वह्न्यभावत्वावच्छिन्नविषयितात्वं तद्रूपावच्छिन्नविषयिताशून्यत्वाभावादेव वारणसम्भवात् ह्रद इत्यादिज्ञानीयविषयितायाश्च स्वरूपसम्बन्धरूपावच्छेदकत्वविरहात्। नच अत्र कल्पे तादृशविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यत्वं न निवेशनीयं वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयिताया अपि स्वरूपसम्बन्धरूपाव-

च्छेदकत्वात् जातिमान् वह्न्यभाववान् इत्यादिज्ञानकालीनस्य जातिमान् ह्रद इत्यादिज्ञानस्य ह्रदे वह्न्यनुमितिप्रतिबन्धकत्वादिति वाच्यम्। तावतापि ह्रदत्वसामानाधिकरण्येन वह्न्यभावस्य अदोषत्वापत्तेः, तत्र जातिसामानाधिकरण्येन वह्न्यभावविषयितायाः स्वरूपसम्बन्धरूपरूपावच्छेदकत्वविरहेण तादृशाव्यापकविषयिताशून्यत्वदलस्यावश्यकत्वात्।

न च संयोगः संयोगाभाववान् इत्यादौ संयोगः संयोगवान् इत्याकारकभ्रमात्मकबाधज्ञानविषये संयोगेऽतिव्याप्तिः तत्र संयोगत्वावच्छिन्नविषयितात्वस्य संयोगत्वविशिष्टविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावात् तादृशरूपावच्छिन्नविषयिताया भ्रमात्मकज्ञाने सत्त्वस्याकिञ्चित्करत्वादिति वाच्यम्। संयोगावच्छिन्नविषयितात्वस्य तादृशतया तादृशविषयिताशून्यत्वस्य संयोगः संयोगवान् इति भ्रमेऽसत्त्वादितिचेन्न। गोत्वाभावो गोत्वाभाववान् इत्यादौ गोत्वाभावो गोत्ववान् इत्याकारकभ्रमात्मकबाधज्ञानविषये गोत्वाभावेऽतिव्याप्तिः तत्र गोत्वाभावत्वविशिष्टविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य गोत्वावच्छिन्नविषयित्वादावसत्त्वात्।

न च यत्संसर्गावच्छिन्नयद्रूपावच्छिन्नविषयितात्वं तादृशविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तत्संसर्गावच्छिन्नतद्रूपावच्छिन्नविषयिताशून्यत्वस्य ज्ञानविशेषणत्वेनैव तत्र नातिव्याप्तिः तथा हि गोत्वाभावत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् समवायसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नविषयितात्वं तादृशविषयिताशून्यत्वस्य गोत्वाभावो गोत्ववान् इतिज्ञानेऽसत्त्वात् केवलगोत्वाभाव इति ज्ञाने तु प्रतियोगितासम्बन्धेनैव गोत्वस्य भानादिति वाच्यम्। तथा सत्यपि गोत्ववत्समानकालीनगोत्वाभावपक्षकस्थलेऽतिव्याप्तिः,

जातिमत्त्वावच्छिन्नविषयितायाः संसर्गानवच्छिन्नतया संसर्गावच्छिन्नत्वनिवेशे जातिमान् जातिमान् इत्यादिज्ञानवारणासम्भवाच्च ।

नच यद्रूपावच्छिन्नसांसर्गिकविषयितानिरूपितयद्रूपावच्छिन्नविषयित्वं विशिष्टविषयित्वाव्यापकं तद्रूपावच्छिन्नसांसर्गिकविषयितानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वनिवेशे नोक्तदोषः, समवायत्वावच्छिन्नसांसर्गिकविषयतानिरूपितगोत्ववत्समानकालीनगोत्वाभावत्वावच्छिन्नविषयताया विशिष्टविषयत्वाव्यापकतया तच्छून्यत्वस्य गोत्ववत्समानकालीनगोत्वाभावो गोत्ववान् इति बाधभ्रमेऽसत्त्वादिति वाच्यम् । तावतापि गगनत्ववत्कालीनगगनत्वाभावो गगनत्वाभाववान् इत्यत्र गगनत्ववत्कालीनगगनत्वाभावो गगनत्ववान् इति बाधभ्रममादाय गगनत्ववत्कालीनगगनत्वाभावेऽतिव्याप्तेः, तत्र स्वरूपत्वावच्छिन्नसांसर्गिकविषयता-निरूपितगगनत्ववत्कालीनगगनत्वाभावत्वावच्छिन्नविषयताया विशिष्टविषयित्वाव्यापकत्वाभावात् ।

न च यद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपितयद्रूपावच्छिन्नविषयितात्वं तादृशविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं निवेशनीयं तथा च उक्तबाधविषयकज्ञाने गगनत्ववत्कालीनगगनत्वाभावत्वावच्छिन्नविषयितानिरूपितगगनत्वत्वावच्छिन्नविषयितात्वस्य तादृशविशिष्टविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेन तादृशाव्यापकीभूतविषयिताशून्योक्तज्ञानीयविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावेन उक्तस्थले नातिव्याप्तिरिति वाच्यम् । एवमपि संयोगवत्संसोगवत्संयोगाभावस्य साध्यतायां संयोगवत्संयोगस्य पक्षतायां संयोगवत्संयोगः संयोगवत्संयोगवत्-

संयोगवान् इत्यादिबाधभ्रमविषयीभूतसंयोगवत्संयोगवत्संयोगवत्संयोगरूपबाधेकदेशेऽतिव्याप्तेः, साध्यघटकप्रथमसंयोगस्य वैशिष्ट्यं संयोगसम्बन्धेन, द्वितीयस्य कालिकेन, पञ्चघटकसंयोगस्य वैशिष्ट्यन्तु कालिकेन, साध्यघटकप्रतियोगित्वन्तु कालिकसम्बन्धावच्छिन्नं ग्राह्यम्।

न च यद्रूपावच्छिन्नसांसर्गिकविषयतानिरूपितयद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपितयद्रूपावच्छिन्नविषयत्वं विशिष्टविषयत्वाव्यापकं तद्रूपावच्छिन्नसांसर्गिकविषयतानिरूपिततद्रूपावच्छिन्नसांसर्गिकविषयता निरूपिततद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपिततद्रूपावच्छिन्न-विषयताशून्यत्वनिवेशेनोक्तातिव्याप्तिः, उक्तस्थलीयबाधभ्रमे तादृशाव्यापकीभूतसंयोगत्वावच्छिन्नसांसर्गिकविषयितानिरूपितसंयोगत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपित संयोगत्वावच्छिन्नविषयता शून्यत्वविरहादिति वाच्यम्। गगनाभाववत्संयोगवत्संयोगपञ्चके उक्तसाध्यकस्थले बाधभ्रममादाय संयोगवत्संयोगवद्गगनाभाववत्संयोगवत्संयोगेऽतिव्याप्तेः। अत्र साध्यघटकप्रथमसंयोगवैशिष्ट्यं स्वरूपसम्बन्धेन। द्वितीयादिवैशिष्ट्यन्तु पूर्ववत्। तथाच स्वरूपत्वावच्छिन्नसांसर्गिकविषयतानिरूपितसंयोगत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपितसंयोगत्वावच्छिन्नविषयित्वमपि न विशिष्टविषयित्वाव्यापकमिति।

तत्तदप्रामाण्यज्ञानाभावस्य तत्तदाहार्य्यभिन्नत्वस्य च तत्तद्व्यक्तित्वेन निवेशे गौरवं अतोऽनुगतरूपेण निवेशः। अनुगतत्वञ्च स्वाभाववत्त्वस्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितावत्त्वोभयसम्बन्धेन अभावविशिष्टान्यत्वम् अतो न संशयान्यत्वरूपनिश्चयत्ववैयर्थ्यम्। एवं विशिष्टद्वयाघटितत्वस्यापि वैयर्थ्यं अनयोस्तु तादृशानुगमतात्पर्य्यग्राहकत्वात्। सम्बन्धव्यावृत्तिस्तु स्वयमूह्या।

याद्दशविशिष्टविषयकनिश्चयविशिष्टयाद्दशविशिष्टविषयक-निश्चयत्वं अनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति ताद्दशविशिष्ट-द्वयाघटितत्वं इत्यत्र विशिष्टद्वयविषयिताशून्यत्वनिवेशे ह्रदो वह्निमान् धूमादित्यादौ एकत्र द्वयमितिरीत्या ह्रदवृत्तित्ववह्नि-व्यापकीभूताभावप्रतियोगित्वोभयवज्जलेऽतिव्याप्तिः। उभय-विषयतानिरूपितजलत्वावच्छिन्नविषयिताया एकत्वेन ताद्दश-विशिष्टद्वयविषयिताशून्यप्रतीतिविषयितावच्छेदकीभूतह्रदवृत्ति-त्ववह्निव्यापकीभूताभावप्रतियोगित्ववज्जलत्ववत्त्वात्। ताद्दश-विशिष्टविषयिताशून्यत्वे सति ताद्दशविशिष्टविषयिताशून्यत्व-निवेशेऽप्यसाधारणेऽव्याप्तिः। असाधारणस्यापि ताद्दशवि-शिष्टद्वयान्तर्गतत्वात्। अतो विशिष्टद्वयविषयिताशून्यत्वमपहाय ताद्दशविशिष्टविषयिताविशिष्टताद्दशविशिष्टविषयिताशून्यत्वं नि-वेशनीयम्। अथ ह्रदत्वादिविशिष्टविषयकनिश्चयविशिष्ट-वह्न्यभाववद्ह्रदत्वाविशिष्टविषयकनिश्चयत्वस्य अनुमितिप्रतिबन्ध-कतानतिरिक्तवृत्तितया ताद्दशविशिष्टद्वयघटितत्वादसम्भवः।

न च परस्परं याद्दशविशिष्टविषयकनिश्चयविशिष्टयाद्दश-विशिष्टविषयकनिश्चयत्वं अनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति ताद्दशविशिष्टद्वयाघटितत्वं निवेश्यत्वमिति न दोष इति वाच्यम्। वह्न्यभाववद्ह्रदत्वविशिष्टविषयकनिश्चयविशिष्टवह्न्य-भाववद्ह्रदत्वविशिष्टविषयकनिश्चयत्वस्यापि ताद्दशतया ताद्दश-विशिष्टद्वयघटितत्वस्यापि बाधादौ सत्त्वादसम्भवादितिचेन्न। याद्दशविशिष्टविषयक-निश्चयविशिष्ट-याद्दशविशिष्ट विषयकनिश्च-यत्वं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिताद्दशवि-शिष्टद्वयाघटितस्य निवेशनीयत्वात्।

अथैवमपि वह्न्यभावज्जलादिमद्वृत्तिजलाभाववद्ह्रदपक्षक-स्थले-ताद्दशजलवद्ह्रदात्मकाश्रयासिद्ध्यादावव्याप्तिः, ताद्दशविशिष्ट-

द्वयघटितत्वात्। नच आश्रयसिद्धिविषयिताघटकभिन्नत्वं तादृशविशिष्टद्वयविषयितायां निवेशनीयमिति वाच्यम्। तथा सति तादृशरीत्या साध्याप्रसिद्ध्यादिविषयताघटकविषयताभिन्नत्वस्यापि निवेशनीयतया गौरवात्। ग्रन्थकारस्य सत्प्रतिपक्षविषयिताघटकविषयिताभिन्नत्वमात्रनिवेशानौचित्यात्। नच यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टाघटकत्वं तादृशविशिष्टद्वये निवेशनीयं अतो न दोष इति वाच्यम्। तथा सति तादृशपक्षकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदादावपि दोषतापत्तेर्नचेष्टापत्तिः, विशिष्टपक्षग्रहाविरोधितया आश्रयासिद्ध्यनात्मकत्वात्।

न च वह्न्यभाववज्जलवत्कालीनकालीनजलवद्ध्रदादिरूपविशिष्टद्वयस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टाघटकत्वेन तादृशविशिष्टद्वयघटितत्वान्नोक्तातिव्याप्तिरिति वाच्यम्। कालीनत्वादिघटितविशिष्टद्वयस्य धारणासम्भवस्योपरि वक्ष्यमाणत्वादिति चेन्न। यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टविषयिताघटकविषयिताभिन्नत्वस्य निरुक्तविशिष्टद्वयविषयितायां निवेशनीयत्वात्। एवञ्च विशिष्टद्वयाघटितत्वशरीरे असम्भववारणाय प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वमपि न देयमिति वह्न्यभाववद्ध्रदत्वविशिष्टविषयकनिश्चयत्वस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्टविषयिताघटकविषयिताभिन्नत्वस्य निरुक्तविशिष्टविषयितायामभावात्।

अथात्र ह्रदो वह्निमान् वह्निमज्जलवत्कालीनजलाभाववद्ध्रदात् इत्यादौ वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः।

तत्र ज्ञानवैशिष्ट्यानवच्छिन्नं यत्तु यद्द्वयप्रतिबन्धकत्वं तदवच्छेदकविषयिताभिन्नं यन्निरूपितविशिष्टद्वयविषयित्वं तच्छून्यप्रतीतिविषयत्वस्य तादृशविशिष्टे सत्त्वात्। न च अत्र तादृशविशिष्टान्तरं यज्जलवद्ह्रदादितद्घटितत्वान्नातिव्याप्तिरिति वाच्यम्। विशेषगुणवद्घटादिसंग्रहाय अग्रे वक्ष्यमाणस्य यत्किञ्चित्प्रतिबन्धकताघटितस्य विशिष्टान्तराघटितत्वस्य सत्त्वात्। ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय विशिष्टान्तराघटितत्वसम्भवात्। नैवम्। स्वव्यापकत्वस्वव्यभिचारित्वैतदुभयसम्बन्धेन प्रतिबन्धकताविशिष्टान्यज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतानतिरिक्तवृत्ति यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तादृशविशिष्टद्वयाघटितत्वं निवेशनीयम्।

न च वह्न्यभाववज्जलादिमद्वृत्तिजलाभाववद्ध्रदपक्षकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः तादृशविशिष्टविषयकज्ञानीयप्रतिबन्धकताद्वयस्यैव आश्रयासिद्धिप्रतिबन्धकताविशिष्टत्वादिति वाच्यम्। स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताविशिष्टान्यज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतानतिरिक्तवृत्ति यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तादृशविशिष्टद्वयविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वेन लक्ष्यतावच्छेदकस्य विवक्षितत्वादिति। अपरे तु स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकयादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशविशिष्टद्वयघटितत्वावच्छेदकं यत् तदन्यत्वं लक्ष्यतावच्छेदके विशेषणीयमिति।

केचित्तु स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयिताकान्यत्वेन यादृशविशिष्टं विशेषणीयं

तादृशयादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्ति तादृशविशिष्टद्वयघटितत्वावच्छेदकं यद् यत् स्वं तदन्यत्वेन दोषतावच्छेदकं विशेषणीयम् अतो नोक्तदोषः। तादृशनिश्चयविशिष्टनिश्चयत्वे स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वनिवेशान्न प्रागुक्ताश्रयासिद्ध्यादौ अव्याप्तिनिश्चयविशिष्टनिश्चयत्वनिवेशान्न विशिष्टद्वयघटितत्वावच्छेदकत्वपदार्थाप्रसिद्धिनिबन्धनो दोषः। निरुक्तस्वावच्छिन्नविषयितात्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयताकान्यत्वस्य यादृशविशिष्टद्वये प्रवेशान्नासम्भवः। अत्रोभयदले प्रतिबन्धकतासामान्यनिवेशाद् वह्निमज्जलवत्कालीनजलाभाववद्ध्रदपक्षकस्थले वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादौ नातिव्याप्तिरित्याहुः।

यत्तु ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकीभूतविषयिताशून्यज्ञानीयविषयिताभिन्ना या तादृशविशिष्टद्वयविषयिता तच्छून्यप्रतीतिविषयतावच्छेदकत्वेन लक्ष्यतावच्छेदकं विशेषणीयमिति। वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदात्मकाश्रयासिद्धिज्ञानीयविषयितायाः ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वविरहेण तादृशप्रतिबन्धकतानवच्छेदकीभूतविषयिताशून्यज्ञानीयविषयिताभिन्ना या उदासीनज्ञानीयतादृशविशिष्टद्वयविषयिता तच्छून्यप्रतीतिविषयितावच्छेदकत्वस्य आश्रयसिद्धित्वादौ सत्त्वेन तत्र नाव्याप्तिः। वह्निमज्जलवज्जलवत्कालीनजलाभाववद्ध्रदपक्षकस्थले वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वस्य तादृशप्रतिबन्धकतानवच्छेदकीभूतवृत्तित्वविषयिताशून्यजलवान् ह्रद इति ज्ञानीयविषयिताभिन्नवह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इति ज्ञानीयतादृशविशिष्टद्वयविषयिता-

शून्यप्रतीतिविषयतावच्छेदकत्वविरहेण वह्न्यभाववज्जलवद्वृत्ति-जलवद्ध्रदादौ नातिव्याप्तिरिति तन्न समीचीनं भाति। वह्न्य-भाववज्जलवत्कालीनत्वाभाववज्जलकालीनजलाभाववद्ध्रदपक्षक-वह्निसाध्यकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः। तज्ज्ञानीयविषयितायां प्रतिबन्धकतानवच्छेदकत्वाभावात्। उक्तरीत्यैव मेयत्वादिविशिष्टव्यभिचारादिवारणसम्भवे वक्ष्यमाण-विशिष्टान्तराघटितत्वविशेषणवैयर्थ्यापत्तेः।

अथ घटो गगनाभाववदभाववत्कालीनगगनवान् इत्यादौ गगनाभाववदभाववत्कालीनगगनाभाववद्घटरूपबाधेऽव्याप्तिः। तादृशबाधज्ञानस्य गगनवत्ताबुद्धिं प्रति अभाववान् गगना-भाववान् अभाववांश्च घट इत्याकारकनिश्चयस्य निश्चयविशिष्ट-निश्चयत्वेन प्रतिबन्धकत्वस्य अवश्यं कल्पनीयतया गगनाभाववद-भाववत्कालीनगगनाभाववद्घटत्वावच्छिन्नप्रकारताशालिनिश्चय-त्वेन प्रतिबन्धकतान्तरे मानाभावेन गगनाभाववान् अभाववान् इत्याकारकनिश्चयविशिष्टाभाववान् घट इत्याकारकनिश्चयत्वस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्ततया तादृशविशिष्ट-द्वयविषयित्वस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदक-तया च गगनाभाववदभाववत्कालीनगगनाभाववद्घटत्वस्य तादृशविशिष्टद्वयविषयिताशून्य-प्रतीतिविषयितावच्छेदकत्वाभा-वादिति।

नच वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्ध्रदपक्षकस्थले वह्न्य-भाववज्जलवद्वृत्तिजलवद्ध्रदात्मकप्रागुक्ताश्रयासिद्धावव्याप्तिवारणाय विशिष्टद्वयाघटितत्वघटकीभूतज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धक-तायां स्वव्यापकत्वस्वव्यभिचारित्वोभयसम्बन्धेन स्वावच्छिन्नविष-यित्वावच्छिन्नप्रतिबन्धकताविशिष्टान्यत्वमनिवेश्य तादृशोभय-सम्बन्धेन तादृशानुमितित्वव्यापकप्रतिबन्धकतानिरूपितस्वाव-

च्छिन्नविषयत्वावच्छिन्नप्रतिबध्यताविशिष्टान्यत्वमेव निवेश्यम्। तथा च उक्तस्थलीयबाधनिश्चयस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वान्तरासत्त्वेऽपि प्रकृतसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतासत्त्वेन उक्तबाधज्ञानीयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायास्तादृशप्रतिबध्यताविशिष्टत्वात् न उक्तबाधादावव्याप्तिः।

न च उक्तस्थले गगनाभाववदभाववत्कालीनघटाभाववद्घटादावतिव्याप्तिः तज्ज्ञानीयप्रतिबन्धकतायां तादृशप्रतिबध्यताविशिष्टान्यत्वाभावादिति वाच्यम्। स्वावच्छिन्नविषयकत्वावच्छिन्नतादृशानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाप्रसिद्धैव उक्तातिव्याप्त्यनवकाशादिति वाच्यम्। ह्रदो वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभावव्याप्यात् इत्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्त्यापत्तेः। तज्ज्ञानीयज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां तादृशानुमितित्वव्यापकतादृशजलाभावव्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपिता या स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबध्यता तद्विशिष्टत्वादिति चेन्न। प्रतिबध्यताविशिष्टान्यविशिष्टद्वयविषयिताशून्यत्वस्य निवेशनीयत्वात्। प्रतिबध्यतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वनिरूपितप्रतिबन्धकतानवच्छेदकविषयिताशून्यज्ञानीयतादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन बोध्यम्।

स्वनिरूपकप्रतिबन्धकत्वञ्च स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकीभूतधर्मावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतधर्मानवच्छिन्नत्वे सति ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन विशेषणीयम्। अतो ह्रदपक्षकजलाभावव्याप्यसा-

ध्वंसस्थले जलाभावव्याप्याभाववज्जलवद्वृत्तिजलवद्ध्रदादौ नाति-व्याप्तिः, न वा ह्रदपक्षकवह्निसाध्यकस्थले वह्निमान् जलाभा-भाववान् वह्निमांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकतामादाय वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिरिति। संसर्गघट-कीभूतानुमितित्वव्यापकप्रतिबध्यतायां स्वनिरूपितप्रतिबन्धक-ताशालिज्ञानीयत्वनिवेशे ह्रदो वह्निमान् वह्न्यभाववज्जलवद्वृत्ति-जलाभावव्याप्यात् इत्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽति-व्याप्तिः। तज्ज्ञानीयविशिष्टद्वयविषयितायास्तादृशजलाभाव-व्याप्यवत्तानिश्चयप्रतिबध्यताविशिष्टत्वात्। अतः स्वनिरूपित-प्रतिबन्धकतानवच्छेदकविषयिताशून्यज्ञानीयत्वनिवेशः।

न च एवं वह्निमज्जलवद्वृत्तिजलाभाववद्ध्रदादिहेतुके वह्न्य-भाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिः तज्ज्ञानीयविशिष्ट-द्वयविषयिताया हेतुमत्ताग्रहप्रतिबध्यताविशिष्टत्वादिति वा-च्यम्। उभयसम्बन्धघटकस्वावच्छेदकत्वपदेन स्वानवच्छेदक-विषयिताशून्यज्ञानीयत्वस्य विवक्षणात्। एवञ्च जनकतावच्छे-दकधर्मानवच्छिन्नान्तं ज्ञानवैशिष्ट्यानवच्छिन्नत्वञ्च अनुपादेयम्। अतएव स्वावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-भेदवत्त्वस्वरूपोभयसम्बन्धेन यद्रूपावच्छिन्नविषयिताशालिनिश्च-यत्वव्यापकं प्रतिबन्धकत्वं तद्रूपत्वं लक्षणार्थः।

तथा च वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदविषयकज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशज्ञाने स्वावच्छेदक-त्वसम्बन्धेन प्रतिबन्धकतायाः सत्त्वेन स्वावच्छेदकत्वसम्बन्धाव-च्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वघटितोभयसम्बन्धेन तादृ-शविशिष्टविषयकत्वाव्यापकत्वात् तादृशविशिष्टेऽतिव्याप्तिवि-रहेण विशिष्टद्वयाघटितत्वनिवेशनम् अनतिप्रयोजनकमिति परास्तम्। गगनाभाववदभाववत्कालीनगगनाभाववद्घटा-

त्मकबाधेऽव्याप्तेरिति तादृशबाधविषयकनिश्चयस्य ज्ञानविशिष्ट-ज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकत्वस्य निरुक्तोभय-सम्बन्धेन तादृशबाधविषयकनिश्चयत्वाव्यापकत्वात्।

अथाभावपक्षकसंयोगेन वह्निसाध्यकस्थले संयोगसम्बन्धाव-च्छिन्नप्रतियोगिताकवह्न्यभाववद्वह्निमदात्मकेऽतिव्याप्तिः। प्रति-योगितासम्बन्धेन वह्न्यवच्छेदेन वह्न्यभाववत्तानिश्चयकाले अभा-वत्वावच्छिन्नविशेष्यकप्रतियोगित्वावच्छिन्नवह्नित्वावच्छिन्नप्रका-रताशालिनिश्चयस्य नैयत्येन तादृशविशिष्टविषयकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वान्तरे मानाभावात्। तज्-ज्ञानीयविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानव-च्छेदकत्वविरहादिति।

न च प्रागुक्ताव्याप्तिभिया विशिष्टद्वयविषयितायां प्रतिबध्य-ताविशिष्टान्यत्वनिवेशेनैव वह्न्यभाववद्ह्रदादावव्याप्तिवारणसम्भवे विशिष्टद्वयाघटितत्वशरीरे ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्व-प्रवेश एव नास्तीति वाच्यम्। वह्न्यभावव्याप्यवद्ह्रदादावव्याप्ति-वारणाय तन्निवेशावश्यकत्वादिति चेन्न। तत्तत्प्रतिबन्धकता-भिन्नत्वेन प्रतिबन्धकतायां विशेषणादिति।

अत्र केचित् विशिष्टद्वयविषयितायां प्रकृतानुमितिप्रतिब-ध्यतानवच्छेदकत्वविशिष्टप्रकृतानुमितिविरोध्यनुमितिजनकता-नवच्छेदकत्वं निवेशनीयम्। न चैवं ह्रदो वह्निमान् वह्नि-मज्जलवत्कालीनजलाभाववद्ह्रदात् इत्यादिस्थले वह्न्यभाववज्जल-वद्वृत्तिजलवद्ह्रदादावतिव्याप्तिः तादृशविशिष्टविषयितायां प्रकृता-नुमितिप्रतिबध्यतानवच्छेदकत्वविशिष्टविरोध्यनुमितिजनकता-नवच्छेदकत्वस्यासत्त्वादिति वाच्यम्। यादृशविशिष्टविषयक-निश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानानुमितीय-यद्रूपावच्छिन्नविषयकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धक-

ताननतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयकत्वावच्छिन्नप्रतिबध्यता-नवच्छेदकत्वविशिष्टविरोध्यनुमितिजनकतानवच्छेदकत्वस्य नि-रुक्तविशिष्टविषयितायां विवक्षितत्वात्। एवञ्च बाधसत्प्रति-पक्षादिविषयितायां निरुक्तजनकतानवच्छेदकत्वाभावान्नास-म्भवः। उक्तस्थलीयवह्न्यभाववद्वह्निमदात्मकविशिष्टविषयितायाञ्च तादृशजनकतानवच्छेदकत्वसत्त्वान्नातिव्याप्तिरित्याहुः।

वस्तुतस्तु अभावधर्मिताकवह्निप्रकारकबुद्धिं प्रति वह्निमान् वह्न्यभाववान् इतिज्ञानविशिष्टवह्निमांश्च अभाव इति ज्ञानमिव घटवान् वह्न्यभाववानिति निश्चयविशिष्टघटवांश्च अभाव इति नानाविधव्यावर्त्तकधर्मावच्छिन्नविशेष्यकतादृशावगाहिज्ञानानां प्रतिबन्धकत्वस्यावश्यकतया सर्वासामेव अभावधर्मिकतादृशावगा-हिबुद्धीनां व्यावर्त्तकधर्ममनिवेश्य लाघवेन ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वं कल्पनीयम्। तथा हि वह्न्याद्यभावत्वावच्छिन्न-प्रकारताशालिनिश्चयविशिष्टाभावत्वावच्छिन्नविशेष्यताशालिनि-श्चयत्वेन प्रतिबन्धकत्वम्। तादृशनिश्चयवैशिष्ट्यञ्च स्वसामानाधि-करण्यस्वनिरूपितविशेष्यताविशिष्टधर्तावच्छिन्नप्रकारताकत्वोभ-यसम्बन्धेन। विशेष्यतावैशिष्ट्यञ्च स्वावच्छेदकतावच्छेदकत्वसम्ब-न्धेन ग्राह्यम्। विशेष्यता च व्यापकप्रतियोगिताकत्वावच्छिन्न-सांसर्गिकविषयितानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारतानिरू-पिता ग्राह्या। अतो न विशेष्यत्वान्तरमादाय कश्चिद्दोषमुपैति इति नव्या वदन्ति। एतन्मते प्रकृतस्थले नातिव्याप्तिः।

अत्रेदमवधेयम्। उक्तरीत्या नानाविधनिश्चयसाधारण्यानु-रोधेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताकल्पने अभावो गगन-त्ववान् आधेयत्वात् इत्यत्र गगनत्वव्यापकीभूताभावप्रतियोग्या-धेयत्वेऽव्याप्तिः। असाधारण्यशरीरे व्यापकताघटकतया प-क्षांशे हेतुमत्त्वस्य निविष्टत्वेन विशिष्टद्वयघटितत्वादिति।

अथ यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तितादृशविशिष्टाघटितत्वमेव निवेश्यताम् किं विशिष्टद्वयाघटितत्वनिवेशनेनेति चेदत्र केचित्। ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतालाभाय तादृशाभिधानम्। परे तु यादृशविशिष्टपदेन वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादेरिव वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदादेरपि उपादेयतया तादृशतादृशानन्तविशिष्टाघटितत्वमपेक्ष्य तद्घटकविशिष्टद्वयमुपादाय तादृशविशिष्टपदार्थवारणमेव सम्यगिति लाघवेन तथोक्तिः।

न च तादृशविशिष्टद्वयाघटितत्वकल्पे वह्न्यभाववज्जलादिमत्स्वरूपविशिष्टविषयकनिश्चयविशिष्टकालीनजलवद्ध्रदत्वविशिष्टविषयकनिश्चयत्वादेरपि तादृशप्रतिबन्धकतावच्छेदकतया तादृशविशिष्टद्वयाघटितत्वनिवेशाद् गौरवमिति वाच्यम्। यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविशिष्टविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायास्तद्घटकत्वाद् वह्न्यभाववज्जलवन्निश्चयविशिष्टकालीनत्वविशिष्टजलवद्ध्रदनिश्चयत्वेन अप्रतिबन्धकतया तादृशरूपस्योपादानासम्भवात्।

वस्तुतस्तु स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतानवच्छेदकीभूतविषयिता-शून्यप्रतीतिविषयतानिरूपकताकत्वेन यादृशरूपद्वयं विशेषणीयम्। न च यादृशविशिष्टविषयकनिश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्ववद् यद्रूपावच्छिन्नविषयितासामान्यं तादृशविशिष्टविषयिताविशिष्टतादृशविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वं तादृशानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपवत्त्वविवक्षणेनैव उपपत्तौ विशिष्टद्वयाघटितशरीरे अतिरिक्तवृत्तित्वविशेषणमपि व्यर्थमिति वाच्यम्। पर्वतवृत्ति जलमिति निश्चयविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुनिश्चयत्वेन प्रतिब-

न्धकतया जलत्वविशिष्टविषयकनिश्चयविशिष्टवह्निव्यापकीभूता-भावप्रतियोगित्वविशिष्टहेतुरूपविशिष्टविषयितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वेन जलत्वविशिष्टजलरूपविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुरूपविशिष्टद्वयघटितत्वेन असाधारण्याव्याप्तिवारणाय तस्य सार्थक्यात् ।

अथ यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चये प्रत्येकाव्यापकीभूतविषयिताशून्यत्वं निवेशनीयमिति । अन्यथा अनतिरिक्तवृत्तित्वकल्पे जातित्वादिना जलत्वावगाहिज्ञानघटितनिश्चयत्वं न तादृशानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति इति विशिष्टद्वयाघटितत्वनिवेशनमकिञ्चित्करं स्यात् । तथा च असाधारण्येनाव्याप्तिः । जलत्वविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यजलमिति निश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वस्य असाधारण्यविषयितायां विरहादिति किमनतिरिक्तनिवेशनम् । यदि च प्रथमविशिष्टनिश्चयेऽव्यापकीभूतविषयिताशून्यत्वं न प्रवेश्यम् । शुद्धजलत्वविशिष्टजलव्यापकताघटितसम्बन्धः शुद्धजलविशिष्टजलधर्मितावच्छेदकज्ञाने भासते इति जातिमद्व्यापकताघटितसम्बन्धो न वह्न्यभाववज्जलवद्रूपविशिष्टघटक इति मन्यते तदापि असाधारण्येऽव्याप्तिवारणायैव तादृशाव्यापकीभूतविषयिताशून्यत्वं देयम् । तावतापि अप्रामाण्यज्ञानाभावाद्यनिवेशेन अनतिरिक्तवृत्तित्वापेक्षया लाघवादिति चेत्, एवमपि जलवत्समानकालीनः पर्वतः जलवत्समानकालीनपर्वतकालीनवह्निमान् जलादित्यादौ जलप्रकारकतादृशपक्षविशेष्यकनिश्चयविशिष्टजलवत्समानकालीनपर्वतकालीनवह्निव्यापकीभूताभावप्रतियोगिहेतुनिश्चयत्वेन प्रतिबन्धकतया तत्त्वासाधारण्ये जलवत्समानकालीनपर्वतकालीनव्यापकीभूताभावप्रतियोगिहेतुरूपेऽव्याप्तिः

तत्र तादृशपक्षरूपतादृशासाधारण्यरूपविशिष्टद्वयघटितत्वात् । अतोऽनतिरिक्तवृत्तित्वनिवेशनमिति ।

न च प्रतिबन्धकीभूतहेतुमत्पक्षविषयकज्ञाने हेतुतावच्छेदकावच्छिन्नविषयितानिरूपिततादृशपक्षविषयिताया अव्यापिकायाः शून्यत्वाभावाद् व्याप्त्यसङ्गतिरिति वाच्यम् । यत्र स्वरूपसम्बन्धेन जलविशिष्टं यत् संयोगसम्बन्धेन जलवज्जलं तस्य पक्षत्वं स्वरूपवज्जलवज्जलवज्जलकालीन वह्नेः साध्यत्वं सकलजलवत्त्वं संयोगसम्बन्धेन ग्राह्यम् । स्वरूपवज्जलस्य हेतुत्वं तत्र तत्सत्त्वीयासाधारण्ये स्वरूपवज्जलवज्जलवज्जलकालीनवह्निव्यापकीभूताभावप्रतियोगिस्वरूपवज्जलेऽव्याप्तिरिति । अथवा यत्र जलवज्जलवज्जलवज्जलवज्जलस्य पक्षत्वं स्वरूपवज्जलवज्जलवज्जलवज्जलकालीन वह्नेः साध्यत्वम् । अत्र पक्षघटकप्रथमवैशिष्ट्यं स्वरूपेण, अन्यजलवैशिष्ट्यन्तु संयोगेन, साध्यघटकसकलजलवत्त्वमेव संयोगेन । अत्र स्वरूपवज्जलवज्जलवज्जलवज्जलकालीनवह्निव्यापकीभूताभावप्रतियोगिस्वरूपवज्जलात्मकविशिष्टस्वरूपवज्जलवज्जलवज्जलवज्जलरूपविशिष्टघटितत्वेनाव्याप्तिः । अतोऽनतिरिक्तवृत्तित्वप्रवेशः ।

अत्रेदं बोध्यम् । यादृशविशिष्टविषयकनिश्चयविशिष्टस्वविषयिताशून्ययादृशविशिष्टविषयकनिश्चयत्वम् अनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वनिवेशनेनैव ह्रदत्वविशिष्टविषयकनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वविषयकनिश्चयत्वमादाय नासम्भवः । एवञ्च मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वविशिष्टविषयकनिश्चयविशिष्टवह्न्यभाववद्ध्रदत्वविशिष्टविषयकनिश्चयत्वमादाय मेयत्वविशिष्टवह्न्यभाववद्ध्रदेऽतिव्याप्तिवारणसम्भवे व्यर्थं स्वतन्त्रविशिष्टान्तराघटितत्वदलेन ।

न च विशेषगुणवद्घटादिरूपाश्रयासिद्ध्यादावव्याप्तिः विशेष-

गुणवद्घटविषयिताशून्यगुणवद्घटविषयकनिश्चयस्य अनुमितिप्रतिबन्धकतया विशिष्टद्वयघटितत्वादिति वाच्यम् । एतन्मतेऽपि तस्य तादृशविशिष्टान्तराघटितत्वरक्षणाय यत्किञ्चित्प्रतिबन्धकतामादाय लक्षणसमन्वय इव मन्मतेऽपि स्वविषयिताशून्ययादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं यत् प्रतिबन्धकतानतिरिक्तवृत्ति तत्प्रतिबन्धकताभिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य लक्ष्यतावच्छेदके विवक्षितत्वात् । अत्र केचित् यादृशविशिष्टविषयकनिश्चयविशिष्टस्वविषयिताशून्ययादृशविशिष्टविषयकनिश्चयत्वम् अनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति इति निवेशेऽपि मेयत्वविशिष्टव्यापकसामानाधिकरण्यघटितसत्प्रतिपक्षेऽतिव्याप्तिः तद्घटकजलव्यापकवह्न्यभावविषयिताया जलवद्ध्रदविषयितायाश्च सत्प्रतिपक्षेऽव्याप्तिभयेन भेदस्य अवश्यं निवेशनीयत्वात् । अतो विशिष्टान्तराघटितदलस्य पृथङ्निवेशस्यावश्यकत्वादित्याहुः ।

नव्यास्तु वह्न्यभाववज्जलवद्वृत्तिजलाभाववान् ह्रदो वह्निमान् धूमात् इत्यादौ मेयत्वविशिष्टवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः । तादृशजलवद्ध्रदेऽव्याप्तिवारणाय प्रतिबन्धकताविशिष्टान्यप्रतिबन्धकतानतिरिक्तवृत्तित्वस्य निश्चयत्वे विवक्षणीयतया तादृशनिश्चयविशिष्टनिश्चयत्वस्य धर्त्तुमशक्यत्वादिति प्राहुः । वस्तुतो गगनाभाववदभाववत्कालीनगगनाभाववद्घटाद्यात्मकबाधाव्याप्तिप्रसङ्गात् तादृशबाधनिश्चयस्य निरुक्तप्रतिबन्धकताभिन्नप्रतिबन्धकत्वासत्त्वादिति ध्येयम् ।

अथ पक्षवृत्तित्वाघटितासाधारण्यानुरोधेन यादृशविशिष्टविषयकनिश्चयत्वव्यापकः, प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मताज्ञानकालीनत्वोभयाभावः, तादृशत्वस्य विवक्षितत्वे ह्रदो वह्निमान् जलात् इत्यादौ जलव्यापकवह्न्यभावेऽतिव्याप्तिः, तादृश-

विषयत्वव्यापकत्वस्य अनुमित्यप्रतिबन्धकत्वपक्षधर्मताज्ञानका-लीनत्वोभयाभावे सत्त्वादिति चेन्न। एतन्मते वह्निव्यापकी-भूताभावप्रतियोगिजलादेरिव जलव्यापकवह्न्यभावस्यापि असा-धारणताया भट्टाचार्य्येण सव्यभिचारे लिखितत्वात्।

अथैवं जलावच्छिन्नधर्मिकवह्निमत्ताबुद्धिं प्रति जलत्वाव-च्छिन्नधर्मिकवह्न्यभावव्याप्यत्वज्ञानप्रतिबन्धकतायाः परामर्श-ग्रन्थे स्वयं भट्टाचार्य्येण व्यवस्थापितत्वात् जलवान् वह्निमान् धूमात् इत्यादौ वह्न्यभावव्याप्यत्वविशिष्टजलेऽतिव्याप्तिः। तस्य च पक्षावृत्तित्वेन सत्प्रतिपक्षत्वाभावादिति चेन्न। पक्षसाध्य-ग्रहाविरोधित्वे सति विशिष्टपक्षे विशिष्टसाध्यग्रहविरोधित्वरूप-बाधविभाजकस्य तत्र सत्त्वेन बाधमध्ये तस्यान्तर्भावात् तद-नन्तर्भावे तु तत्तत्प्रतिबन्धकताभेदस्य लक्षणे निवेशनीयत्वात्। एतेन वह्निमान् जलात् इत्यादौ वह्न्यभाववज्जलवदात्मकेऽति-व्याप्तिः। तद्विषयित्वव्यापकत्वस्य प्रकृतानुमित्यप्रतिबन्धकत्व-पक्षधर्मिकहेतुमत्ताकालीनत्वाभावे सत्त्वादिति परास्तम्।

अथ ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छि-न्नत्वोभयाभाववदनुमितिप्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्न-विषयित्वं तद्रूपावच्छिन्नो दोष इति सामञ्जस्ये किं विशिष्टद्वया-घटितत्वनिवेशनेति तन्न साधु। तथा हि तत्र यद्यनुमितिप्रति-बन्धकतावच्छेदकं स्वरूपसम्बन्धरूपं तदा हेतुमत्पक्षेऽतिव्याप्तिः। तादृशोभयाभाववदसाधारण्यज्ञानप्रतिबन्धकतायाः स्वरूपसम्ब-न्धरूपावच्छेदकत्वस्य हेतुमत्पक्षविषयितायाः सत्त्वात्। यदि चानतिरिक्तवृत्तित्वं निवेश्यते तदा जलं वह्निमत् जलात् इत्या-दिस्थले तादात्म्येन हेतौ वह्न्यभाववह्निव्यापकीभूताभावप्रति-योगित्ववद्वृत्तितादृशप्रतियोगित्ववज्जलरूपासाधारण्यघटितेऽति-व्याप्तिरिति विशिष्टद्वयाघटितत्वनिवेशनमावश्यकम्।

एतेन पक्षधर्मिकहेतुमत्ताज्ञानभिन्नज्ञानवैशिष्ट्यानवच्छिन्न-प्रतिबन्धकतानिवेशनमपि न साधु । तत्रापि स्वरूपसम्बन्धरूपा-वच्छेदकत्वनिवेशे हेतुमत्पक्षेऽतिव्याप्तिरिति । अनतिरिक्त-वृत्तित्वनिवेशे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तेः, जल-हेतुकस्थले जलवद्ध्रदज्ञानविशिष्टवह्न्यभाववज्जलवद्विषयकनिश्च-यत्वावच्छिन्नप्रतिबन्धकतायास्तादृशज्ञानभिन्नज्ञानवैशिष्ट्यानव-च्छिन्नतया तदनतिरिक्तवृत्तित्वस्य तादृशविशिष्टविषयितायां सत्त्वात् ।

यदपि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वासा-धारण्यविषयताभिन्नत्वोभयाभाववत् यद्रूपावच्छिन्नविषयिता-सामान्यं प्रकृतानुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपाव-च्छेदकत्ववत् तद्रूपवत्त्वं वक्तव्यम् । तथा च हेतुमत्पक्षे नाति-व्याप्तिः, न वा पूर्वोक्तासाधारण्यघटिततादृशविशिष्टद्वयघटिते-ऽतिव्याप्तिः । तस्य विशिष्टान्तरेण तादृशेन तादृशाप्रतियोगि-त्ववज्जलरूपेण घटितत्वात् । तदपि न वह्न्यभाववद्ध्रदादाव-व्याप्तेर्वह्न्यभाववद्ध्रदविषयितायां अभाववान् वह्न्यभाववान् अभाववांश्च ह्रद इति ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छे-दकत्वासाधारण्यविषयिताभिन्नत्वयोः सत्त्वात् ।

यदि च ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितत्वासा-धारण्यविषयित्वाव्वृत्तित्वोभयाभाववत्प्रतिबन्धकतावच्छेदकता-वद् यद्रूपावच्छिन्नविषयितासामान्यं तद्रूपवत्त्वं वक्तव्यमित्युच्यते तदा जलहेतुपक्षकस्थले वह्निव्यापकीभूताभावप्रतियोगिजलवान् वह्न्यभाववान् जलवृत्तितादृशजलमिति ज्ञाननिष्ठज्ञानवैशिष्ट्या-वच्छिन्नप्रतिबन्धकतानिरूपितत्वासाधारण्यविषयित्वाव्वृत्तित्वोभ-याभाववत्प्रतिबन्धकतावच्छेदकत्वस्य जलवृत्तितादृशजलविष-यित्वे सत्त्वेन जलवृत्तिवह्न्यभाववद्वह्निव्यापकाभावप्रतियोगिजल-

यत्कालीनवह्निव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तिः । तादृशविशिष्टान्तरेण अघटितत्वादसाधारण्यमात्रस्य तत्प्रतिबन्धकताघटिततादृशत्वाभावात् ।

यदि च असाधारण्यविषयिता इत्यत्र असाधारण्यप्रकारत्वातिरिक्तप्रकारत्वानिरूपितविषयिता, असाधारण्यविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयिता वा निवेश्यते तदा स्वरूपसम्बन्धरूपावच्छेदकत्वकल्पेऽपि सम्भवतीति तदपि न सत् । वह्निमज्जलवत्कालीनजलाभाववद्धदपक्षकवह्निसाध्यकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्धदेऽतिव्याप्तेः, तादृशविशिष्टविषये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वादिति । वस्तुतः कपिसंयोगाभाववद्वृक्षाद्यतिव्याप्तेः, स्वरूपसम्बन्धरूपावच्छेदकत्वं न निवेशयितुं शक्यते इत्येव तत्त्वम् ।

अथवा यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वम् अनुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वे सति ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकं तादृशविशिष्टद्वयाघटितत्वनिवेशेनैव सम्यक् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं व्यर्थमिति चेन्न । अनुमितिं प्रति चिकीर्षासामग्र्याः प्रतिबन्धकतया कृतिसाध्यपाकत्वविशिष्टविषयकनिश्चयविशिष्टेष्टसाधनीभूतपाकत्वविशिष्टविषयकनिश्चयत्वस्य अनुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकतया ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतया च तादृशविशिष्टविषयिताशून्यत्वनिवेशे महागौरवं तदपेक्षया अनतिरिक्तत्ववृत्तित्वनिवेशे च कृतिसाध्यपाकत्वविशिष्टविषयकनिश्चयविशिष्टेष्टसाधनीभूतपाकत्वविशिष्टविषयकनिश्चयत्वस्य अनुमित्समानकालीनतादृशविशिष्टविषयकनिश्चयविशिष्टतादृशविशिष्टविषयकनिश्चये फलेच्छाद्यसमानकालीननिश्चये च वृत्तितया

कृतिसाध्यव्यापकत्वविशिष्टविषयकनिश्चयविशिष्टेष्टसाधनीभूतपाकत्वविशिष्टविषयकनिश्चयत्वस्य नानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वरूपावच्छेदकत्वम्। अतएव यादृशपदेन कृतिसाध्यपाकत्वविशिष्टविषयकनिश्चयविशिष्टेष्टसाधनीभूतपाकत्वविशिष्टविषयकनिश्चयत्वस्य धर्त्तुमशक्यत्वादिति तल्लाघवमिति कश्चित्।

अथ अनुमितिप्रतिबन्धकतानवच्छेदकविषयिताशून्यज्ञानवृत्ति यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमिति किं विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वनिवेशेनेति चेत्, अव्यापकीभूतविषयिताशून्यत्वमपि निष्फलमेव। मैवम्। वह्न्यभाववज्जलवत्कालीनत्वाभाववद्ध्रदपक्षकवह्निसाध्यकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदादावतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वस्य एकत्र द्वयमिति रीत्या वह्न्यभावधूमाभाववद्ध्रदादावतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वस्य एकदेशवारणाय अव्यापकीभूतविषयिताशून्यत्वस्य च सार्थक्यात्।

ननु यद्रूपावच्छिन्नविषयिताशालिनिश्चये तादृशयत्किञ्चित्प्रतिबन्धकतानवच्छेदकविषयिताशून्यत्वनिवेशेनैव उक्तस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिवारणं सम्भवति एकदेशेऽतिव्याप्तिवारणाय वरमव्यापकीभूतविषयिताशून्यत्वमपि निवेश्यम्। मैवम्। अव्यापकीभूतविषयिताशून्यत्वनिवेशेऽपि गोत्वाभावपक्षकगोत्वाभावसाध्यकस्थले गोत्वाभावत्वावच्छिन्नाव्यापकीभूतविषयताशून्यगोत्वाभावो गोत्ववान् इत्यादिबाधभ्रमविषयीभूतगोत्वाभावेऽतिव्याप्त्यापत्तेरिति कृतं पल्लवितेन।

प्रथमविशिष्टान्तराघटितत्वकल्पे स्वरूपसम्बन्धरूपावच्छेदकतानिवेशे असाधारण्यज्ञानीयप्रतिबन्धकतावच्छेदकविषयिताश्रयहेतुमत्पक्षघटितवह्न्यभाववज्जलवद्ध्रदात्मकबाधेऽव्याप्तिः।

अतोऽनतिरिक्तवृत्तित्वनिवेशनम्। स्वावच्छिन्नाविषयकत्वमुपेक्ष्य स्वाश्रयाविषयकत्वनिवेशे मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिः, मेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वावच्छिन्नविषयकप्रतीतौ दुर्घटत्वादित्यनेन भट्टाचार्य्येणाभिहिता। सा च न सङ्गच्छते। व्यभिचारत्वेन पटावगाहिप्रतीतेरपि प्रमेयत्वविशिष्टव्यभिचारत्वाश्रयाविषयकतया तदीयविषयतावच्छेदकत्वस्य व्यभिचारत्वे सुघटत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वेऽसम्भवात् इति।

अत्र केचित् असम्भवभयेन स्वाश्रयाविषयकप्रतीतिविषयवृत्तिधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव निवेश्यम्। तन्निवेशेनैव अतिव्याप्तिसङ्गतिः। परे तु व्यभिचारत्वेन पटाद्यवगाहिप्रतीतेरपि स्वाश्रयाविषयकत्वं दुर्घटम्। सामानाधिकरण्यसम्बन्धेन साध्याभाववद्वृत्तित्वविशिष्टहेतुतावच्छेदकस्यैव व्यभिचारत्वपदार्थतया सामानाधिकरण्यघटकतया च तादृशप्रतीतौ स्वाश्रयमानमप्यावश्यकम्, तथा च यथाश्रुतमेव सम्यक्। नच स्वाश्रयाविषयकत्वनिवेशे प्रमेयं गगनवत् इत्यादौ स्वाश्रयाविषयकप्रतीत्यप्रसिद्ध्या गगनाभाववत्प्रमेयात्मकबाधादावव्याप्तिसम्भवेऽतिव्याप्तिदानमसङ्गतमिति वाच्यम्। प्रमेयनिष्ठगगनाभावादेरेव तत्र दोषत्वात्।

स्वाश्रयाविषयकप्रतीतिविषयतावच्छेदकं यत् तादृशं तदवच्छिन्नघटितत्वावच्छेदकं यद् यत् स्वं तदन्यत्वरूपं प्रतियोगिनिष्ठत्वमन्तर्भाव्य विशिष्टान्तराघटितत्वं निवेश्यापि अव्याप्तिवारणसम्भवाच्च। न च एवं स्वपदार्थाप्रसिद्धिर्मेयत्वविशिष्टव्यभिचारत्वादेरपि स्वपदेन उपादातुमशक्यत्वादिति वाच्यम्। धूमव्यभिचारिवह्नित्वादेरेव स्वपदेन धर्त्तुं शक्यत्वादिति ध्येयम्।

स्तावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितावच्छेदकं तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशे प्रमेयं गगनवत् वाच्यत्वात् इत्यादौ व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् गगनाभाववत्प्रमेयत्वं तदाश्रयाविषयकप्रतीतेरसिद्धेरिति भट्टाचार्य्येणाभिहितम्।

अत्रेयमनुपपत्तिः। सर्व्वत्रैव साध्याभावव्याप्यवत् पक्षतावच्छेदकादिकं साध्याभाववद्वृत्तित्वव्याप्यवद्धेतुतावच्छेदकञ्च आदाय असम्भव एव स्यात्। अत्राहुः। घटो गगनवान् इत्यादौ गगनाभाववद्घटरूपबाधे लक्षणगमनान्नासम्भवः। तत्र साध्याभाववदवृत्तित्वरूपव्याप्तेः सत्प्रतिपक्षघटकत्वमते सत्प्रतिपक्षाभावात्। अवृत्ति गगनादिकमादाय दोषस्तु तदाश्रयनिष्ठमुख्यविशेष्यताशून्यत्वनिवेशेनैव वारणसम्भवात्।

न च एवं मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिः तत्र तादृशविशिष्टान्तरं यद् व्यभिचारादिकं तन्निष्ठमुख्यविशेष्यताशून्यस्थानीयमुख्यविशेष्यतावच्छेदकत्वस्य विवक्षितत्वादिति ध्येयम्। व्यापकसामानाधिकरण्यरूपव्याप्तिविशेषितधर्म्मवद्घटादिकमादाय दोषस्य ज्ञानवैशिष्ट्यावच्छिन्नत्वघटितोभयाभाववत्प्रतिबन्धकतानिवेशेनापि वारणात्। अप्रसिद्धिनिबन्धना व्याप्तिवर्ज्जाभाववद्ह्रदादौ न सम्भवति इति वा तदुपेक्षिता।

यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वमिति कल्पे स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपाप्रसिद्ध्या असम्भवं दत्त्वा भट्टाचार्य्येण दूषितम्। अत्र अवच्छेदकत्वद्वयम् अनतिरिक्तवृत्तित्वरूपं ग्राह्यम्।

अन्यथा प्रथमावच्छेदकत्वं यदि स्वरूपसम्बन्धरूपं तदा अभाववान् वह्न्यभाववान् अभाववांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकताया अपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गततया तादृशप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितावच्छेदकाप्रसिद्ध्या असम्भवापत्तेः। एवं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकताश्रयविषयितावच्छेदकीभूतविशिष्टान्तरं यद् ह्रदत्वादिकं तद्घटितत्वात्तद्दोषतादवस्थ्यम्। अतो द्वितीयावच्छेदकत्वमपि अनतिरिक्तवृत्तित्वरूपम्।

न च स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकतावद् यद्रूपावच्छिन्नविषयितासामान्यं तादृशविशिष्टान्तरविवक्षणे ह्रदत्वादिकमादाय न दोष इति वाच्यम्। एवमपि धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमदात्मकबाधाव्याप्त्यापत्तेः। तादृशबाधविषयिताव्यापकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितासामान्यकरूपाप्रसिद्धेः। तादृशविषयितासामान्यकरूपाप्रसिद्ध्या ह्रदो वह्निमान् वह्न्यभावाभाववन्निरूपितत्वाभाववद्वृत्तित्वकालीनधूमात् इत्यादौ हेतुविशेषणासिद्धिघटितसत्प्रतिपक्षाव्याप्तिप्रसङ्गाच्च।

न च स्वावच्छिन्नविषयितानिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकतावद्यद्रूपावच्छिन्नविषयितासामान्यं तादृशविशिष्टान्तराघटितत्वमित्युक्तौ नोक्तदोष इति वाच्यम्। एवमपि धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र घटकालीनधूमव्यभिचारिवह्निमदात्मकेऽतिव्याप्तिः। घटकालीनधूमव्यभिचारिवह्निमान् धूमाभाववान् इति बाधज्ञानीयघटकालीनधूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयि-

तानिष्ठावच्छेदकताकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितासामान्यकं विशिष्टान्तरं यद् धूमाभाववद्वृत्त्यव्यभिचारिवह्निमदादि तदघटितत्वस्य तत्र सत्त्वात्।

वस्तुतस्तु वह्न्यभाववद्ध्रदवान् धूमाभाववान् तादृशह्रदवांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकताया अपि बाधविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गततया बाधविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितासामान्यकाप्रसिद्धिरेव स्यादिति ध्येयम्। यदि च स्वावच्छिन्नविषयित्वावच्छिन्नत्वमित्यत्रापि स्वावच्छिन्नविषयितासामान्यावच्छिन्नत्वनिवेशेनैव उक्तदोषाणां वारणसम्भवे अनतिरिक्तवृत्तित्वप्रवेशो व्यर्थ इति मन्यते, तदा व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तत्राव्याप्तिः। निरुक्तविशिष्टान्तरं यज्जलवद्ध्रदादि तदघटितत्वादिति तद्वारणाय अनतिरिक्तवृत्तित्वनिवेश इति ध्येयम्।

अथ स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयाभावकेवलान्वयिकं यत् स्वं तद्वत्त्वं हेत्वाभासत्वमित्युक्तौ एतत्कल्पस्य निर्दोषत्वे कथं तत् परित्यक्तमिति। न च जातिमान् वह्न्यभाववान् इत्यादिज्ञानमादाय दोषवारणाय स्वावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितायाश्च स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशस्यावश्यकत्वे बाधविशिष्टव्यभिचारादावतिव्याप्तिः, तत्र बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयतादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितावच्छेदकत्वघटितनिरुक्तोभयाभावस्य केवलान्वयित्वादिति वाच्यम्। तादृश-

प्रतिबन्धकतासामान्यावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वमनिवेश्य यद्रूपावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशेनापि जातिमान् वह्न्यभाववान् इत्यादिज्ञानवारणसम्भवेन यद्रूपावच्छिन्नविषयत्वाव्यापकीभूतविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयकत्वं तादृशप्रतिबन्धकतासामान्यावच्छेदकं तत्त्वं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वैतदुभयाभावस्य व्यभिचारविशिष्टबाधत्वादावसत्त्वात् केवलान्वयित्वविरहेण बाधविशिष्टव्यभिचारादावतिव्याप्त्यनवकाशादिति चेन्न। ह्रदे वह्न्यभावः वह्न्यभाववान् ह्रद इत्यादिज्ञानद्वयसाधारणैकरूपेण प्रतिबन्धकत्वमते तादृशोभयाभावस्य ह्रदवृत्तिवह्न्यभावत्वादावसत्त्वेन केवलान्वयित्वाभावादसम्भवापत्तेः।

न च ज्ञानद्वयसाधारणैकप्रतिबन्धकत्वमताश्रयणे भट्टाचार्य्योक्ते यथाश्रुतकल्पे तादृशप्रतिबन्धकतासामान्यावच्छेदकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्य ह्रदवृत्तिवह्न्यभावत्वादावेव तादृशरूपस्य प्रसिद्धत्वादसम्भवद्यनासङ्गतिरिति वाच्यम्। भट्टाचार्य्योक्तकल्पे तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशस्यैव आवश्यकत्वेन ह्रदवृत्तिवह्न्यभावत्वादेस्तादृशविशिष्टान्तररूपत्वाभावात्। अन्यथा बाधविशिष्टव्यभिचारादावतिव्याप्त्यापत्तेः व्यभिचारविशिष्टबाधत्वादेरेव तादृशरूपत्वेन प्रसिद्धत्वात् तदवच्छिन्नाघटितत्वस्य तत्र सत्त्वात्। अतएव भट्टाचार्य्योक्तकल्पे स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितावच्छेदकस्वपर्य्याप्त्यवच्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयतावच्छेदकस्य तादृशविशिष्टान्तरपदेन विवक्षणे मेयत्वविशिष्टव्यभिचारत्वादेरेव तादृशत्वेन

तदवच्छिन्नाघटितत्वस्य व्यभिचारादौ सत्त्वादसम्भवदानासङ्गतिरिति निरस्तम्।

स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितायाम् उक्तयुक्त्या स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशस्य आवश्यकत्वेन मेयत्वविशिष्टव्यभिचारत्वादेरपि तादृशत्वाभावात्। एतेन स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितावच्छेदकत्वानवच्छिन्नप्रकारतावच्छेदकस्य विशिष्टान्तरपदेन विवक्षणे वह्न्यभाववद्ध्रदत्वादेरेव तादृशत्वादसम्भवदानमसङ्गतमित्यपि अपास्तम्। स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवम्भूतं यत् स्वं मेयत्वविशिष्टव्यभिचारत्वादि तदवच्छिन्नाघटितत्वमित्यत्रापि प्रतिबन्धकतावच्छेदकत्वद्वयमेव अनतिरिक्तवृत्तित्वरूपं ग्राह्यम्।

अन्यथा उभयत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे ह्रदो वह्निमान् धूमात् इत्यत्र मेयत्वविशिष्टवह्न्यभाववान् धूमाभाववान् तादृशवह्न्यभाववांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकताया अपि मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गततया तादृशप्रतिबन्धकतासामान्यावच्छेदकत्वस्य शुद्धवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायामसत्त्वात् स्वपदार्थाप्रसिद्धिः स्यादतः प्रथमावच्छेदकत्वमनतिरिक्तवृत्तिरूपम्।

एवञ्च यत्र संयोगसम्बन्धावच्छिन्नप्रतियोगित्वसंसर्गावच्छिन्नप्रतियोगिताकवह्न्यभाववदभावस्य पक्षत्वं संयोगेन वह्नेर्हेतुत्वं धूमादेः साध्यत्वं तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वह्निविशिष्टाभावरूपाश्रयासिद्धिघटितवह्न्यभाववदभावरूपपक्ष-

रूपसिद्धावव्याप्तिः। तद्घटकवह्निविशिष्टाभावस्य तादृशस्वरूपासिद्धिविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकीभूततादृशस्वरूपासिद्धिज्ञानीयविषयतावच्छेदकत्वेन तस्या अपि स्वपदेन धर्त्तुं शक्यत्वात्। तादृशप्रतिबन्धकतावच्छेदकविषयितासामान्यकत्वविवक्षणे च तत्रैव मेयत्वविशिष्टस्वरूपासिद्धावतिव्याप्तिः। मेयत्वविशिष्टतादृशसिद्धिविषयताव्यापकप्रतिबन्धकतासामान्यावच्छेदकविषयितासामान्यकस्य अप्रसिद्ध्या स्वपदेन मेयत्वविशिष्टतादृशासिद्धिं धर्त्तुं शक्यत्वात्।

अथवा घटत्वावच्छेदेन अभाववदन्यत्ववैशिष्ट्येन प्रतियोगितासम्बन्धेन वह्नीयवदन्यत्ववैशिष्ट्येन च घटितपक्षतावच्छेदकाभाववदन्यघटकालीनवह्नीयवदन्यत्वघटकालीनपर्वतो द्रव्यवान् इत्यादिस्थले आश्रयासिद्धिद्वयघटिते वह्न्यभाववद्घटेऽतिव्याप्तिः। तादृशविशिष्टविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकत्वस्य स्वभिन्नविशिष्टविषयितामात्र एव असत्त्वेन स्वपदेन तादृशविशिष्टस्य धर्त्तुमशक्यत्वात्। एवं यत्र पर्वतत्वसामानाधिकरण्येन नीलत्वस्य वह्नेश्च प्रत्येकं दोषत्वं तत्र वह्निमन्नीलपर्वतादावतिव्याप्तिः स्यात्। अतो द्वितीयावच्छेदकत्वमपि अनतिरिक्तवृत्तित्वरूपं वाच्यमिति।

स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् तद्रूपावच्छिन्नत्वमेव समुदितार्थ इति कल्पे, न च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायां वह्नित्वावच्छिन्नानिरूपितत्वसत्त्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववद्ध्रदत्वे सत्त्वादसम्भव इति वाच्यम्। तत्तदवच्छिन्नाविशेष्यकप्रतीतिविशेष्यतावच्छेदकत्वस्य विवक्षितत्वात्। अथ स्वावच्छिन्नविष-

यकत्वावच्छिन्नप्रतिबन्धकत्वमित्यत्र अवच्छेदकत्वम् अनतिरिक्त-वृत्तित्वरूपं ग्राह्यम्। प्रतिबन्धकतावच्छेदकमित्यत्रापि तथा। अन्यथा उभयदिशि स्वरूपसम्बन्धरूपावच्छेदकत्वे च पर्वतो वह्नि-मान् धूमात् इत्यादौ पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिः। नच स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकत्वमित्यत्र स्वरूपसम्ब-न्धरूपं प्रतिबन्धकतावच्छेदकत्वमित्यत्र अनतिरिक्तवृत्तित्वमेव निवेश्यम्। तथा च पाषाणमयत्वावच्छिन्नपर्वतत्वावच्छिन्नविष-यकस्वावच्छिन्नप्रतिबन्धकताया अनतिरिक्तवृत्तिविषयतानिरूप-कतावच्छेदकरूपाप्रसिद्ध्या पाषाणमयत्ववत्पर्वते नातिव्याप्ति-रिति वाच्यम्। ह्रदो वह्निमान् धूमात् इत्यादौ जलवान् वह्न्य-भाववान् जलवांश्च ह्रद इत्यादिज्ञानप्रतिबन्धकतावच्छेदकीभूत-जलवद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याव-च्छेदकीभूतवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयिताया जलवद्ध्रदत्वावच्छिन्नानिरूपितत्वासत्त्वेन उदासीनयादृशयादृश-धर्मावच्छिन्नानिरूपितत्वं तत्रास्ति तादृशतादृशधर्मावच्छिन्ना-विषयकप्रतीतिविषयतावच्छेदकत्वस्य जलवद्ध्रदत्वे सत्त्वात्।

एवमभाववान् वह्न्यभाववान् अभाववांश्च ह्रद इत्यादिज्ञा-नीयप्रतिबन्धकताया अपि तादृशप्रतिप्रतिबन्धकतासामान्यान्त-र्गतत्वेन तदनतिरिक्तवृत्तिविषयितावच्छेदकरूपाप्रसिद्ध्या वह्न्य-भाववद्ध्रदादावव्याप्तिश्च। न च उक्तदोषभिया प्रथमावच्छेदकत्व-मेव अनतिरिक्तवृत्तित्वरूपं विवक्षितं द्वितीयन्तु स्वरूपसम्बन्ध-रूपमेवेति वाच्यम्। धूमाभाववद्धूमव्यभिचारिवह्निमदादावव्याप्तेः धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयिताव्यापकप्रति-बन्धकतासामान्यावच्छेदकं यद्रूपावच्छिन्नविषयितासामान्यं तद्रू-पाप्रसिद्धेः।

अथ बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्न-

प्रतिबन्धकतासामान्यावच्छेदकीभूतं न बाधत्वादिप्रत्येकधर्माव-च्छिन्नविषयित्वमपि तु बाधविशिष्टव्यभिचारविषयित्वम् । तन्न । बाधविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितमिति बाधविशिष्ट-व्यभिचारत्वावच्छिन्नेऽतिव्याप्तिरुक्ता तत् कथं सङ्गच्छते । तथा हि बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्ध-कतासामान्यावच्छेदकीभूतं यत्किञ्चिद्विषयित्वं यद्व्यभिचारवि-शिष्टबाधत्वावच्छिन्नविषयित्वं तत्र बाधविशिष्टव्यभिचारत्वाव-च्छिन्नानिरूपितत्वान्नातिव्याप्तिरिति ।

न च ह्रदे वह्न्यभावः वह्न्यभाववान् ह्रद इत्यादिज्ञानसाधा-रणप्रतिबन्धकतया वह्न्यभाववद्ध्रदादावसम्भवः वह्न्यभाववद्ध्रद-त्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकी-भूताया ह्रदे वह्न्यभाव इति ज्ञानीयह्रदत्वविशिष्टवह्न्यभावत्वा-वच्छिन्नविषयिताया वह्न्यभाववद्ध्रदत्वावच्छिन्नानिरूपितत्वात् अतस्तस्य वारणाय तादृशयत्किञ्चिद्विषयित्वे स्वावच्छिन्नविषय-कत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्न-विषयितात्वं तद्रूपावच्छिन्नविषयिताशून्यज्ञानवृत्तित्वं स्वावच्छि-न्ननिरूपितविषयिताकविशिष्टनिरूपितं वा विशेषणं देयमिति बाधविशिष्टव्यभिचारत्वावच्छिन्नेऽतिव्याप्तितादवस्थ्यमिति वा-च्यम् । कालिकादिसम्बन्धेन वह्न्यभाववत्ताज्ञानस्य अप्रतिबन्ध-कतया स्वरूपसम्बन्धनिवेशस्य आवश्यकतया स्वरूपस्वरूपसम्ब-न्धावच्छिन्नाधेयत्वोभयसम्बन्धमादाय एकप्रतिबन्धकताया दुर्घ-टत्वात् ।

न च समम्युन्नेखिप्रतीतिस्थले स्वरूपसम्बन्धावच्छिन्नाधा-रतानिरूपिताधेयता भासते प्रथमान्तत्वस्थले स्वरूपसम्बन्धाव-च्छिन्नाधेयतानिरूपिताधारता इति ह्रदत्वावच्छिन्नविषयितानि-रूपिताधेयत्वविषयतानिरूपितनिरूपितत्वविषयतानिरूपितत्वा-

धारतानिरूपितवह्न्यभावत्वावच्छिन्नविषयताकनिश्चयत्वेन एकरूपेण प्रतिबन्धकतया असम्भवः तद्वारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वनिवेशनमावश्यकमिति अतिव्याप्तिसङ्गतिरिति वाच्यम्। अप्रामाण्यज्ञानानामननुगमेन निश्चयत्वाननुगमेन च एकप्रतिबन्धकताया वक्तुमशक्यत्वात्।

कथञ्चिदप्रामाण्यज्ञानाद्यनुगमे एतद्ग्रन्थस्य एकप्रतिबन्धकपरत्वे व्यभिचारघटितबाधसंग्राहकयद्रूपावच्छिन्नविषयितात्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वकल्पे ह्रदवृत्तिवह्न्यभावादेरेव तादृशरूपान्तराघटितत्वसम्भवे असम्भवानवकाशात् तद्ग्रन्थस्य उन्मत्तप्रलपितत्वापत्तेः। यदि च बाधविशिष्टव्यभिचारादावतिप्रसङ्गवारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानवृत्तित्वं यद्रूपावच्छिन्नविषयितायां दीयताम्। एवञ्च असम्भवदानं सङ्गच्छते एव इत्युच्यते, तदा स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपितावच्छेदकक: कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यस्य एवम्भूतं यत् यत् स्वं मेयत्वविशिष्टव्यभिचारत्वादि, तदवच्छिन्नाघटितत्वकल्पे असम्भवस्य प्रसक्तौ धूमव्यभिचारिवह्निमत्त्वमादाय अव्याप्तिदानस्य सन्दर्भविरोधो वक्ष्यमाण एव। बाधविशिष्टव्यभिचारत्वावच्छिन्ने अतिव्याप्तिभिया स्वावच्छिन्नविषयिताव्यापकीभूतविषयिताशून्यत्वाप्रवेशात्।

यत्तु ह्रदे पक्षे महानसीयवह्न्यादेः साध्यत्वे महानसीयवह्न्यभाववद्ध्रदो वह्न्यभाववद्ध्रदश्च बाध इति तत्र महानसीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूताया वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताया महानसीयवह्न्यभाववद्ध्रदत्वावच्छिन्नानिरूपितत्वादिति तद्वारणाय ता-

दृशाव्यापकविषयिताशून्यत्वनिवेशनमावश्यकमिति बाधविशिष्ट-व्यभिचारे अतिव्याप्तिसङ्गतिः । तन्न । वह्निसामान्याभावबुद्धे-र्वह्निबुद्धिं प्रति प्रतिबन्धकतायाः क्लृप्तत्वेन तत्साधारणैकप्रति-बन्धकतायां मानाभावात् ।

न च साक्षात्परम्परासाधारणैकनिरूपितत्वस्य स्वयं दूषि-तत्वात् बाधादावसम्भवात् वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयक-त्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतवह्न्यभाववद्ध्रद-वत्प्रमेयविषयितायां साक्षात् वह्न्यभाववद्ध्रदादिनिरूपितत्वा-भावादिति तादृशाव्यापकविषयिताशून्यज्ञानवृत्तित्वविशेषणं यत्किञ्चिद्विषयत्वे आवश्यकमिति अतो बाधविशिष्टव्यभिचारे अतिव्याप्तिरिति वाच्यम् । साक्षात्परम्परासाधारणैकनिरूपित-त्वासम्भवेऽपि यादृशरूपावच्छिन्नघटितानिरूपितत्वस्यैव निवेश-नीयतया असम्भववारणस्य अतिव्याप्तिवारणस्य च सम्भवात् ।

यदपि ह्रदो वह्न्यभाववान् इति ज्ञानीयवह्न्यभावत्वावच्छि-न्नविषयित्वे वह्न्यभाववद्ध्रदाद्यनिरूपितत्वेनासम्भव इति यद्रूपा-वच्छिन्नविषयितात्वावच्छिन्नं प्रति स्वावच्छिन्नविषयित्वावच्छिन्न-प्रतिबन्धकतासामान्यस्य व्यापकत्वं वाच्यम् । तथा च जाति-मान् वह्न्यभाववान् इति ज्ञानसाधारणवह्न्यभाववद्ध्रदत्वावच्छि-न्नविषयित्वावच्छिन्नं प्रति स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिब-न्धकतासामान्यस्य व्यापकताभङ्गेन स्वावच्छिन्नविषयकत्वसमा-नाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नविषयितात्वं तद्रूपावच्छिन्नविषयिताशून्यज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्न-विषयिताव्यापकत्वं वा वाच्यमिति बाधविशिष्टव्यभिचारे अति-व्याप्तिरिति तत्तुच्छम् ।

यद्रूपावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगिताव-च्छेदकं यद्रूपावच्छिन्नविषयितात्वं तद्रूपावच्छिन्नविषयिताशून्य-

त्वमेव विशेषणं देयमिति । न तु दोषतावच्छेदकावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यत्वमतिव्याप्तिवारणासम्भवबाधकविशेषणसत्त्वे अतिव्याप्तिसम्पादकासम्भववारकविशेषणदानस्य अनौचित्यात् । दोषतावच्छेदकावच्छिन्नविषयत्वाव्यापकविषयिताशून्यत्वनिवेशे वह्न्यभाववज्जातिमत्कालीनत्वविशिष्टवह्न्यभाववद्ध्रदे अतिव्याप्तिश्च । वह्न्यभाववज्जातिमत्कालीनत्वविशिष्टवह्न्यभाववद्ध्रदत्वरूपदोषतावच्छेदकाभिमतस्वावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं न वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयितात्वम्, किन्तु अन्यत् तद्रूपावच्छिन्नविषयिताशून्यत्वं जातिमान् वह्न्यभाववान् इति ज्ञाने वर्त्तते इति । वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वावच्छिन्नं प्रति दोषताच्छेदकावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताया अव्यापकत्वमिति । वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वं न किञ्चिद्विषयितान्तर्गतं किन्तु वह्न्यभाववज्जातिमत्कालीनवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वमेव तच्च तादृशधर्मावच्छिन्ननिरूपितमेवेति ।

अथ बाधाभावविशिष्टबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतापि सामान्यान्तर्गता इति व्यभिचारविशिष्टबाधत्वावच्छिन्नविषयिता न तादृशप्रतिबन्धकतासामान्यावच्छेदिकेति नासङ्गतिरिति चेन्न । मेयत्वविशिष्टव्यभिचारादौ तादृशरीत्या शुद्धव्यभिचारत्वावच्छिन्नविषयित्वमपि न किञ्चिद्विषयितान्तर्गतं अपि तु मेयत्वविशिष्टव्यभिचारादिकविषयित्वम् इत्यतिव्याप्तिभिया प्रकृतानुमितिप्रतिबन्धकत्वस्य निवेशनीयत्वात् ।

न च द्रव्यत्वं वह्निमत् द्रव्यत्वाभाववच्छैवालात् इत्यादिस्थलीयवह्न्यभाववद्द्रव्यत्वरूपबाधविशिष्टवह्न्यभाववद्वृत्तिशैवालरूपव्यभिचारे अतिव्याप्तिः तत्र व्यभिचारविशिष्टबाधविषयि-

तायाः ताद‍ृशानुमितिप्रतिबन्धकतासामान्यावच्छेदकत्वाभावादिति वाच्यम्। तत्र द्रव्यत्ववद्वह्न्यभाववद्‍वृत्तिशैवालविशिष्टवह्न्यभाववद्‍द्रव्यत्वविषयिताया अपि ताद‍ृशतया तत्र स्वावच्छिन्नानिरूपितत्वादतिव्याप्तिविरहादिति चेन्न। वह्न्यभाववज्जलाभाववद्वह्निव्यभिचारिजलं वह्निमज्जलादित्यादिस्थलीयवह्न्यभाववज्जलरूपबाधविशिष्टव्यभिचारे वह्न्यभाववद्‍वृत्तिजलरूपेऽतिव्याप्तिः। तत्रत्यव्यभिचारविशिष्टबाधविषयितायाः ताद‍ृशप्रतिबन्धकतासामान्यान्तर्गतपक्षतावच्छेदकविशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वाभावात्।

नच तत्र जलत्वविशिष्टे वह्नितदभावावगाहिज्ञानस्य आहार्यत्वमिति वाच्यम्। जलत्वसामानाधिकरण्येन वह्नितदभावयोर्ज्ञानात्। नच ताद‍ृशविशिष्टस्य पक्षग्रहविरोधितया लक्ष्यत्वमेवेति वाच्यम्। जलत्वव्यापकत्वविशिष्टस्वरूपसम्बन्धेन वह्न्यभावविशिष्टजलरूपबाधविशिष्टव्यभिचारस्य स्वरूपसम्बन्धघटितवह्न्यभाववज्जलविशिष्टव्यभिचारात्मकाश्रयासिद्ध्या अन्तर्गतत्वेन अलक्ष्यत्वात्। न सोऽपि साधीयान् शुद्धस्वरूपसम्बन्धेन वह्न्यभाववज्जलविशिष्टं यत् वह्निव्यभिचारिजलं तद्विशिष्टजलत्वव्यापकत्वविशिष्टस्वरूपसम्बन्धेन बाधस्वरूपं ताद‍ृशविशिष्टविषयत्वमपि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तत्र बाधविशिष्टव्यभिचारानिरूपितत्वेन अतिव्याप्त्यभावात्।

स्वरूपसम्बन्धेन वह्न्यभाववज्जलाभाववद्‍बुद्धिं प्रति स्वरूपसम्बन्धेन वह्न्यभावघटितवह्न्यभाववज्जलवत्ताज्ञानप्रतिबन्धकताया जलत्वव्यापकत्वविशिष्टस्वरूपशुद्धस्वरूपसाधारणस्वरूपत्वेनैव निवेशात् प्रतिबन्धकताया ऐक्यात्। अन्यथा शैवालधर्मिकद्रव्यत्ववत्त्ववह्न्यभाववद्‍द्रव्यत्वाज्ञानयोरपि प्रतिबन्धकताद्वयापत्त्या पूर्वस्थलत्यागानौचित्यात्।

अत्र केचित् प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धे-तुमत्पक्षरूपस्य सत्प्रतिपक्षाभिप्रायकमिदम्, तादृशसत्प्रति-पक्षविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं प्रति हेतु-व्यापकसाध्याभावसमानकालीनतद्धेतुमत्पक्षविषयित्वमपि तत्र स्वावच्छिन्ननिरूपितत्वाभावात् तादृशसत्प्रतिपक्षेऽव्याप्तिः। अथ वा प्रागुक्तगगनाभाववदभाववत्कालीनगगनाभाववद्घटात्मकबाधे-ऽव्याप्तिः। तादृशबाधविषयित्वावच्छिन्नप्रतिबन्धकतासामान्या-वच्छेदकत्वस्य गगनाभाववदभाववद्वृत्तिगगनाभाववद्घटत्वाव-च्छिन्नविषयितायामपि सत्त्वेन तत्र स्वावच्छिन्ननिरूपितत्वात्। अतस्तद्वारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वा-नवृत्तित्वस्यापि तादृशयत्किञ्चिद्विषयित्वे विवक्षणीयतया व्यभि-चारविशिष्टबाधत्वावच्छिन्नविषयिताया धर्त्तुमशक्यत्वादति-व्याप्तिसङ्गतिवारणाय स्वावच्छिन्नविषयित्वाव्यापकविषयिता-शून्यत्वस्य यत्किञ्चिद्विषयित्वे विवक्षणीयतया व्यभिचारविशिष्ट-बाधत्वावच्छिन्नविषयिताया धर्त्तुमशक्यत्वादतिव्याप्तिसङ्गतिः। अतएव वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय वि-शिष्टद्वयाघटितोऽपि सफलः, अन्यथा जलवद्ध्रदविशिष्टवह्न्य-भाववज्जलत्वावच्छिन्नविषयितायास्तादृशतया तत्र स्वावच्छिन्ना-निरूपितत्वात् तादृशविशेषणमनर्थकम्। परन्तु साध्यवदवृत्ति-मत्पक्षस्य सत्प्रतिपक्षतामते एतादृशी रीतिर्न सम्भवति, विशिष्टद्वयाघटितत्वनिवेशोऽपि निष्फलः। बाधविशिष्टव्यभि-चारादावतिव्याप्तिश्च न सन्दर्भविरुद्ध इति ध्येयम्।

वस्तुतस्तु स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकत्वमित्यत्र अवच्छेदकत्वं स्वरूपसम्बन्धरूपम्। अनतिरिक्तवृत्तित्वञ्च प्रति-बन्धकतावच्छेदकत्वमित्यत्र स्वरूपसम्बन्धरूप एव। प्रथमे स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशात्। धूमव्यभिचारिवह्नि-

मान् धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्त्यव्यभिचारिवह्निमदात्मकबाधेनाव्याप्तिः। अन्यथा तादृशविषयिताव्यापकप्रतिबन्धकतावच्छेदकविषयित्वाप्रसिद्धेः तत्राव्याप्तिः। एवञ्च बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकत्वं व्याप्तिज्ञानप्रतिबन्धकत्वमात्रमेव न तु साध्यवत्ताज्ञानप्रतिबन्धकत्वमपि तादृशप्रतिबन्धकत्वे बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयितानिष्ठ-स्वरूप-सम्बन्धरूपावच्छेदकता-निरूपकत्वाभावात्। तथाच बाधविशिष्टव्यभिचारत्वविशिष्टविषयित्वावच्छिन्नव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकीभूतबाधविशिष्टव्यभिचारत्वावच्छिन्नविषयिताया उदासीनघटत्वावच्छिन्नानिरूपितत्वेन तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्य बाधविशिष्टव्यभिचारत्वे सत्त्वेनातिव्याप्तिसङ्गतिरिति।

न च तादृशधूमाभाववद्वृत्तिविशिष्टधूमव्यभिचारिवह्नित्वावच्छिन्नविषयित्वावच्छिन्न-व्याप्तिज्ञानप्रतिबन्धकतावच्छेदक-व्यभिचारत्वावच्छिन्नविषयिताया बाधत्वावच्छिन्नानिरूपितत्वेन तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधविशिष्टव्यभिचारत्वे असत्त्वात् तत्र नातिव्याप्तिरिति वाच्यम्। वह्निर्धूमवान् वह्नेरित्यादौ एकत्र द्वयमिति रीत्या धूमाभावधूमाभाववद्वृत्तित्ववद्वह्नित्वविशिष्टबाधात्मकव्यभिचारेऽतिव्याप्तेर्ग्रन्थकर्तुरभिप्रेतत्वादिति दिक्। एतेन उभयत्रैव स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽपि ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयित्वानवच्छिन्नत्वोभयाभाववत्त्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यविवक्षयैव ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय जलवद्ध्रदादौ प्रागुक्तदोषस्य वारणसम्भवे एतत्कल्पस्य निर्दोषत्वमिति प्रलपितमपास्तम्।

न च प्रथमावच्छेदकत्वं स्वरूपसम्बन्धरूपं द्वितीयन्तु अन-

तिरिक्तावृत्तित्वरूपं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय वह्न्यभाववद्ध्रदादावतिव्याप्तिस्तु प्रतिबन्धकतायां निरुक्तोभयाभाववत्त्वविवक्षयैव वारणीया। तथा च वह्निर्धूमवान् वह्नेरित्यादौ धूमाभावधूमाभाववद्वृत्तित्ववद्वह्नित्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिधूमाभाववद्वह्निकालीनधूमाभाववद्वृत्तिवह्निमत्त्वावच्छिन्नविषयितायां स्वावच्छिन्नानिरूपितत्वसत्त्वात् उक्तातिव्याप्त्यनवकाशेनैव तत्कल्पस्य निर्दोषत्वमिति वाच्यम्। तथा सति वह्निव्यापकीभूताभावप्रतियोगित्वाभाववज्जलं वह्निमज्जलात् इत्यादौ वह्निव्यापकीभूताभावप्रतियोगित्ववज्जलाभाववत् तादृशप्रतियोगित्ववच्च जलमित्यादिज्ञानीयप्रतिबन्धकताया निरुक्तोभयाभाववत्त्वेन सामान्यान्तर्गततया तादृशप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयितावच्छेदकाप्रसिद्ध्या वह्निव्यापकीभूताभावप्रतियोगिजलरूपाश्रयासिद्धावव्याप्त्यापत्तिरिति ध्येयम्।

अथ यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमित्यत्र शेषांशे निश्चयत्वस्य संशयान्यज्ञानत्वरूपस्य विवक्षणीयतया तादृशविशिष्टविषयकस्यापि तादात्म्यसम्बन्धेन वैशिष्ट्याभिधानादेव उपपत्तौ प्रथमनिश्चयत्वांशप्रवेशनमनतिप्रयोजनकमिति चेन्न। तादात्म्येन वह्न्यभाववज्जलवद्विषयकनिश्चयविशिष्टस्य वह्न्यभाववज्जलवन्मात्रविषयकनिश्चयस्य तादृशोभयविषयकस्य अप्रसिद्धतया तदुभयविषयकज्ञानस्य तादृशप्रत्येकविशिष्टविषयकत्वाव्यापकीभूतविषयिताशून्यत्वविरहात् यादृशविशिष्टपदेन वह्न्यभाववज्जलवद्रूपविशिष्टस्य जलवद्ध्रदरूपविशिष्टस्य च धर्त्तुमशक्यत्वेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे अतिव्याप्त्यापत्तेः तादृशविषयित्वाव्यापकीभूतद्वयाप्रसिद्ध्या असम्भवापत्तेर्वा।

न च यादृशविशिष्टपदेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रद-रूपविशिष्ट एव धर्त्तव्यः। तथा च तादृशविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रद इत्याकारकनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया नातिव्याप्तिरसम्भवो वेति वाच्यम्। यादृशविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति इत्यस्यैव सम्यक्त्वे वैशिष्ट्यप्रवेशस्य वैयर्थ्यापत्त्या किं तदंशे निश्चयत्वव्याप्यत्वानुसरणेन वृत्तित्वादिघटितविशिष्टवारणासम्भवस्य प्रागुक्तत्वाच्च।

न च यादृशविशिष्टविषयित्वाव्यापिका सती यादृशविशिष्टविषयित्वाव्यापिका या विषयिता यादृशविशिष्टविषयित्वविशिष्टयादृशविषयित्वाव्यापिका वा या विषयिता तच्छून्यत्वनिवेशात् न पूर्वोक्तदोषाणामवकाश इति वाच्यम्। ह्रदपक्षकजातिमज्जलवत्कालीनवह्निसाध्यकानुमितौ जातिमज्जलवत्कालीनवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे अतिव्याप्त्यापत्तेः। जातिमज्जलवत्कालीनवह्न्यभाववज्जलवद्रूपविशिष्टविषयित्वाव्यापकत्वस्य जातिमज्जलवत्त्वावच्छिन्नविषयितायामभावात् निरुक्ताव्यापकीभूतविषयिताशून्यजलवान् जलवत्कालीनवह्न्यभाववान् जातिमांश्च जलवान् इति निश्चयेऽपि जातिमज्जलवत्कालीनवह्न्यभाववज्जलवद्रूपविशिष्टविषयकनिश्चयविशिष्टजलद्ध्रदरूपविशिष्टविषयकनिश्चयत्वस्य सत्त्वेन प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वविरहात् यादृशविशिष्टपदेन निरुक्तविशिष्टद्वयस्य धर्त्तुमशक्यत्वात्।

एतेन स्वावच्छिन्नविषयकत्वावच्छिन्नयत्प्रतिबन्धकतावच्छेदकीभूतविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वमिति समुदितार्थः। स्वावच्छिन्नविषयकत्वव्यापकयत्किञ्चित्प्रतिबन्धकत्वं यद्रूपावच्छिन्नविषयकत्वव्यापकं

तद्रूपावच्छिन्नविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वमिति निष्कृष्टार्थः। न चात्र स्वावच्छिन्नविषयकत्वावच्छिन्नत्वं यत्किञ्चित्प्रतिबन्धकतायां निवेशनं व्यर्थमिति वाच्यम्। ह्रदो वह्निमान् धूमात् इत्यत्र वह्न्यभाववद्ध्रदरूपबाधघटकीभूते शुद्धह्रदे अतिव्याप्त्यापत्तेः। वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वस्य ह्रदनिरूपितत्वेन तादृशविषयितात्वव्यापकत्वस्य शुद्धह्रदनिरूपितत्वे सत्त्वादिति।

न च स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकं यत्किञ्चित्प्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वमिति निष्कृष्टार्थमेव वक्तव्यं किं स्वावच्छिन्नविषयकत्वव्यापकत्वनिवेशेनेति वाच्यम्। वह्न्यभाववज्जातिमद्ध्रदे अतिव्याप्त्यापत्तेः। वह्न्यभाववज्जातिमद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानवृत्तियद्रूपावच्छिन्नविषयितापदेन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताया धर्तुमशक्यत्वेन यद्रूपपदेन वह्न्यभाववज्जातिमद्ध्रदत्वावच्छिन्नविषयिताया धर्त्तव्यतया वह्न्यभाववज्जातिमद्ध्रदत्वावच्छिन्नविषयितात्वव्यापकत्वस्य तादृशनिरूपितत्वे सत्त्वादिति।

न च यद्रूपावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यत्वमपि निवेशनीयं तावतापि व्यापकतानिवेशापेक्षया लाघवमिति वाच्यम्। वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे अतिव्याप्त्यापत्तेः। न च तत्रातिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वमेव निवेशनमिति वाच्यम्। व्यापकत्वमपेक्ष्य तादृशनिवेशस्यैव गुरुत्वात्। न च स्वावच्छिन्नविषयकत्वं यद्रूपावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयि-

तानिरूपकतावच्छेदकं सत् स्वावच्छिन्नविषयिताशून्यप्रतीति-विषयतानिरूपकतावच्छेदकं यद्रूपं तादृशरूपान्तराघटितत्व-मिति निष्कृष्टार्थत्वे असम्भवमुक्तं भट्टाचार्य्येण तन्न सङ्गच्छते।

तथा हि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदक-विषयतानिरूपकतावच्छेदकत्वस्वावच्छिन्नविषयिताशून्य-प्रतीति-विषयतानिरूपकतावच्छेदकत्वैतदुभयाभावकेवलान्वयिकत्वात् स्वं तदवच्छिन्नत्वनिवेशेनैव सामञ्जस्यादिति-चेन्न। ह्रदे वह्न्यभाववह्न्यभाववान् ह्रद इति ज्ञानद्वयसाधारणैकरूपेण प्रतिबन्धकत्वमते तादृशोभयाभावस्य केवलान्वयित्वाभावात्। न च ज्ञानद्वयसाधारणैकप्रतिबन्धकत्वमते अत्र कल्पे असम्भव एव नास्ति स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयतानिरूपकतावच्छेदकं यत् ह्रदवृत्ति वह्न्यभावत्वं तस्यापि वह्न्यभाववद्ह्रदत्वावच्छिन्न-विषयिताशून्यप्रतीतिविषयतानिरूपकतावच्छेदकत्वादिति वाच्यम्। बाधविशिष्टव्यभिचारे अतिव्याप्तिवारणाय अव्यापकीभूतविषयिताशून्यज्ञानवृत्तित्वस्य विषयितायां निवेशनीयत्वादिति।

तथा च बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकं यत् बाधविशिष्टव्यभिचारत्वं तस्य बाधविशिष्टव्यभिचारत्वावच्छिन्न-विषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकत्वाभावेन तादृशरूपाप्रसिद्धेर्व नातिव्याप्तिः। एवम् असम्भवदानं सङ्गतमिति। स्वसजातीयविशिष्टान्तराघटितत्वकल्पे विशेष्यदले विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यमुक्तं भट्टाचार्य्येण। तन्न सङ्गच्छते। घटादेरपि स्वपदे धर्तुं शक्यत्वात्।

तथा हि यद्विषयकनिश्चयोत्तरानुमितिसामान्ये प्रकृतपक्षे

प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावः तत्त्वं बाधत्वम् । एवंरीत्या व्यभिचारत्वादिकं निर्वाच्यम् । तथा च निर्वह्निः पर्वतो वह्निमान् इत्यादौ घटविषयकनिश्चयोत्तरानुमितौ पक्षविषयितानिरूपितसाध्यवैशिष्ट्यावगाहित्वाभावादिति । घटादिवारणाय तद्दलसार्थक्यमिति । न च वह्निमत्पर्वतरूपताद्दशस्थलीयाश्रयासिद्धग्रसंग्रहः ताद्दशबाधत्वाश्रयवह्न्यादिघटितत्वादिति वाच्यम् । असिद्धित्वमादाय लक्षणसमन्वयात् ।

स्ववृत्तिहेत्वाभासविभाजकीभूतयत्किञ्चिद्धर्मवद्विशिष्टान्तराघटितत्वस्यैव विवक्षितत्वात् । अन्यथा विशेषगुणवद्घटादेरसंग्रहापत्तेः । गुणवद्घटादेराश्रयासिद्धित्वादिना साजात्यविरहेऽपि बाधत्वादिना तत्सत्त्वात् । यत्किञ्चित्त्वनिवेशे चाश्रयासिद्धित्वमादायैव तत्र लक्षणसमन्वयः ।

अथ वह्न्यभाववान् ह्रदो वह्निमान् इत्यादौ वह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तिः । ताद्दशवह्न्यभावादिघटितत्वात् तद्वारणाय यद्विषयकनिश्चयोत्तरानुमितौ सामान्ये विरोधिविषयताप्रयुक्तः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावः तत्त्वं बाधत्वम् इत्यादिरीत्या हेत्वाभासविभाजको निर्वाच्यः । तथा च घटादिवारणाय विरोधिविषयताप्रयुक्तदलवैयर्थ्यमिति चेन्न । तथासति विशेष्यदलवैयर्थ्यप्रसङ्गेन विरोधिताप्रयुक्तदलवैयर्थ्यनिर्वचनानौचित्यात् । न च सिद्धिविषयवारणाय विशेष्यदलसार्थक्यं साजात्यघटितविषयितायां विरोधित्वं न देयम् यथा सन्निवेशे वैयर्थ्याभावादिति वाच्यम् । तथा सति विशेष्यदले विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्याभावेन असङ्गत्यापत्तेरिति दिक् ।

केचित्तु एवंरीत्या बाधत्वादिनिर्वचने स्ववृत्तिहेत्वाभासविभाजकस्य अन्यत्र असत्त्वादसम्भवापत्तेः ताद्दशस्य प्रतिव्यक्तिभिन्नत्वात् । परन्तु यद्धर्मावच्छिन्नविषयताप्रयुक्तोभयाभावप्रयो-

जनकयत्किञ्चिदभावाधिकरणतायां ज्ञानवैशिष्ट्याप्रयोज्यत्वे सति स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्धर्मावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वं तद्धर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्धर्मवत्त्वमिति स्वसजातीयविशिष्टान्तराघटितदलनिष्कर्षः।

तथा च वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयताप्रयोज्यं यत् सत्प्रतिपक्षह्रदवृत्तिवह्न्यभावनिश्चयोत्तरानुमितिसामान्यनिष्ठसाध्यवैशिष्ट्याभावाधिकरणत्वं तद्ध्रदवृत्तिवह्न्यभावसत्प्रतिपक्षविषयिताप्रयोज्यमपीति। सत्प्रतिपक्षादिकमेव विशिष्टान्तरं तदघटितत्वञ्च वह्न्यभाववद्ह्रदत्वावच्छिन्नेऽस्तीति तत्र लक्षणसमन्वयः। ज्ञानवैशिष्ट्याप्रयोज्यत्वञ्च अभाववान् वह्न्यभाववान् अभाववांश्च ह्रद इति निश्चयीयाभाववद्ह्रदत्वावच्छिन्नविषयिताप्रयुक्तत्वमादाय दोषवारणाय एकदेशविषयितामादाय असम्भववारणाय व्यापकत्वपर्य्यन्तानुसरणम्। विशेषगुणवद्घटादिसंग्रहाय यत्किञ्चित्त्वनिवेशः। तथा च एकदेशे अतिव्याप्तिवारणाय विशेष्यदलम्। परन्तु घटादिविषयत्वप्रयुक्तताद्दशाधिकरणत्वासिद्धा स्वपदेन धर्त्तुमशक्यत्वात् तद्वारकविरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यमिति प्रतियोगिनि स्वत्वान्तर्भाव इति। धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादिस्थलीयबाधविषयिताप्रयोज्यायां प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां व्यभिचारविषयित्वाप्रयोज्यत्वान्न ताद्दशविशिष्टान्तरं व्यभिचारत्वावच्छिन्नमिति नाव्याप्तिरिति।

न च एवं व्यभिचारविशिष्टमेयत्वादावतिव्याप्तिरिति वाच्यम्। यद्धर्मावच्छिन्नविषयितापदेन यद्धर्मावच्छिन्नविषयितान्तःपातिविषयिताविवक्षणात्। व्यभिचारविशिष्टमेयत्वविषयितायास्ताद्दशाधिकरणत्वाप्रयोजकत्वेऽपि व्यभिचारविषयिताया-

स्तथात्वात्तते:। यद्धर्मपदेन व्यभिचारविशिष्टमेयत्वादेरपि धर्त्त-व्यत्वेन स्वसजातीयविशिष्टान्तरघटिते व्यभिचारविशिष्टमेयत्वादिकमपीति नातिव्याप्तिः। एवञ्च तत्कल्पेऽपि व्यभिचारघटितबाधे अव्याप्तिदानमग्रे सङ्गच्छते। बाधविषयतान्त:पातिव्यभिचारविषयताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणतायां व्यभिचारविषयताप्रयोज्यत्वसत्त्वेन यद्धर्मपदेन बाधत्वादिसंग्रहात्।

स्ववृत्तियावद्धेत्वाभासविभाजक इत्यादिरपि यद्धर्मावच्छिन्नविषयतान्त:पातिविषयताप्रयुक्तं निरुक्तोभयाभावप्रयोजकीभूतं यद्यदभावाधिकरणत्वं तत्तदधिकरणत्वं तद्धर्मावच्छिन्नस्य विशिष्टान्तरविषयिताप्रयोज्यं तदघटितत्वमित्यर्थः। न च व्यभिचारविशिष्टमेयत्वादावतिव्याप्तिवारणाय अन्त:पातिविषयतात्वमनिवेश्य विशेष्यदले विरोधिविषयताप्रयुक्तत्वमित्यत्र स्वीयविरोधिविषयताप्रयुक्तमित्यर्थो वाच्य: तथा च न व्यभिचारघटितबाधादावव्याप्तिरिति वाच्यम्। धूमवान् अवृत्तिवह्नेरित्यादिसाधनाप्रसिद्धिघटितव्यभिचारात्मकधूमाभाववद्वृत्तिवह्नौ तावताप्यव्याप्तिरित्याहुः। तच्चिन्त्यम्। उक्तरीत्या घटादावतिव्याप्तिवारकतया विरोधिविषयताप्रयुक्तत्वदलस्य सार्थक्यासम्भवेऽपि आहार्यस्थले एकदेशे अतिव्याप्तिवारकत्वेनैव सार्थक्यसम्भवेन तद्वैयर्थ्याभिधानासङ्गतितादवस्थ्यात्।

विशिष्टान्तराघटितत्वेन अघटितस्य विशिष्टसाध्यसाधनग्रहाविरोधिज्ञाननिष्ठविषयितासम्बन्धेन व्याप्तिग्रहप्रतिबन्धकतावच्छेदकत्वाभावस्य तावतिरिक्तावृत्तित्वादिरूपस्य व्यभिचारादिविभाजकस्य अत्र विवक्षितत्वादिति भट्टाचार्य्या:। अत्र विशिष्टसाध्यसाधनग्रहाविरोधित्वानिवेशे पर्वतो धूमवान् अवृत्तिसत्त्वात् इत्यत्र धूमाभाववद्वृत्तिसत्त्वरूपव्यभिचारेऽव्याप्ति: उक्तव्यभिचारत्वेन स्वसजातीय-

विशिष्टान्तरं यद्वृत्तिसत्त्वं तद्घटितत्वात् तद्वारणाय यदि विशि-ष्टसाधनग्रहाविरोधित्वमात्रं निविश्यते तदा ह्रदः प्रतियोगिता-नवच्छेदकवह्नित्ववत्वात् जलात् इत्यत्र स्वव्यापकसाध्यसामा-नाधिकरण्यरूपव्याप्तिग्रहविरोधिविषयजलसमानाधिकरणाभाव-प्रतियोगितावच्छेदकवह्नित्वरूपव्यभिचारेऽव्याप्तिः। तस्यापि उक्तव्यभिचारत्वेन स्वसजातीयविशिष्टान्तरं यत् प्रतियोगिताव-च्छेदकवह्नित्वं तद्घटितत्वात्। अतो विशिष्टसाध्यग्रहाविरो-धित्वस्यापि निवेशः।

न च एतद्विशेषणप्रक्षेपेऽपि उक्तव्यभिचारद्वये अव्याप्तिवा-रणमशक्यम् उक्तविशिष्टान्तरद्वयस्यैव विशिष्टसाध्यसाधनग्रहा-विरोधिज्ञाननिष्ठविषयितासम्बन्धेन व्याप्तिग्रहप्रतिबन्धकतान-तिरिक्तवृत्तित्वादिति वाच्यम्। अभिप्रायापरिज्ञानात् उक्तविशे-षणेन विशिष्टसाध्यग्रहत्वाव्यापकत्वे सति विशिष्टसाधनग्रहत्वा-व्यापकत्वे च सति यद्व्याप्तिग्रहत्वव्यापकप्रतिबध्यत्वं तन्निरू-पितप्रतिबन्धकतायाः शुद्धविषयित्वसम्बन्धेन तादृशप्रतिबन्धक-तातिरिक्तवृत्तित्वेन स्वसाजात्याभावान्नाव्याप्तिरिति।

न च स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विव-क्षणीयं तथा च बाधादिघटकव्यभिचारादौ बाधत्वाद्यसत्त्वात् न तादृशबाधादिसाजात्यमतस्तत्संग्रहसम्भव इति वाच्यम्। एवं सति बाधविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादि-यावद्धर्मेण स्वसजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्रसिद्धावपि तदघटितत्वादतिव्याप्तेरिति भट्टाचार्य्याः। ननु स्ववृ-त्तिहेत्वाभासविभाजकं यद्यद्रूपं तत्प्रत्येकाश्रयविशिष्टान्तर-घटितयद्यत्तदन्यत्वस्य प्रकृते विशेषणत्वान्नातिव्याप्तिः। तथा हि बाधविशिष्टव्यभिचारवृत्ति तादृशरूपं यद्बाधत्वं व्यभिचार-त्वञ्च तत्प्रत्येकाश्रयो बाधो व्यभिचारश्च तद्घटितत्वात् इत्यनुगम-

ज्ञानवृत्तिहेत्वाभासविभाजकरूपत्वव्यापकभिन्नत्वम्। व्यापकत्वन्तु स्वाश्रयवृत्तित्वसम्बन्धेन। स्वाश्रयत्वन्तु स्वाविषयकप्रतीतिविषयत्वाधेयत्वोभयसम्बन्धेन। आधेयत्वन्तु स्वाविषयकप्रतीत्यविषयत्वसम्बन्धावच्छिन्नं ग्राह्यम्। वृत्तित्वन्तु पर्य्याप्तिसम्बन्धावच्छिन्नाधेयत्वरूपं ग्राह्यम्। तथा च बाधविशिष्टव्यभिचारवृत्तिबाधत्वादिरूपत्वव्यापकत्वस्य बाधविशिष्टव्यभिचारे सत्त्वेन तत्र तदन्यत्वासत्त्वादिति वाच्यम्। तथापि अवच्छेदावच्छेदेन बाधादौ लक्षणासम्भवात् नैष सारसिकः पन्था इति ध्येयम्।

यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्तप्रकृतपक्षे प्रकृतसाध्यावगाहित्वप्रकृतसाध्यव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणतातद्रूपावच्छिन्नत्वं भट्टाचार्य्येणाभिहितम्। तत्र निर्वह्निः पर्वतो वह्निमान् धूमात् इत्यत्र पाषाणमयत्वविशिष्टपर्वतविषयकनिश्चयोत्तरानुमितिसामान्ये प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वस्य प्रकृतपक्षे प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वस्य च उभयाभावसत्त्वात्।

एवं स्वविषयिताप्रयोज्यविशिष्टान्तरविषयित्वाप्रयोज्योभयाभावप्रयोजिका पाषाणमयो न वह्निमान् पर्वतश्च पाषाणमय इति ज्ञानोत्तरज्ञाननिष्ठा प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तत्कत्वमपि पाषाणमयत्वविशिष्टपर्वतेऽस्ति पाषाणमयत्वावच्छेदेन वह्न्यभावाप्रसिद्ध्या विशिष्टान्तरविषयित्वाप्रयोज्यत्वस्य तदधिकरणतायामक्षतत्वात्। ततो यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभाववत्त्वमपहाय विरोधिविषयताप्रयुक्तत्वतादृशोभयाभाववत्त्वं निवेशितम्। तथा च प्रतिबन्धकज्ञानोत्तरवर्त्ति ज्ञाननिष्ठोभयाभावप्रयोजकत्वस्य प्रतिबन्धकज्ञानवृत्तिप्रतिबन्धकतावच्छेदकविषयि-

तायामेव स्वीकारात्। पाषाणमयो न वह्निमान् इति ज्ञान-शून्यकालीनपाषाणमयत्वविशिष्टपर्वतविषयकज्ञानोत्तरानुमिति-विरोधिविषयत्वाप्रयुक्तत्वविशिष्टतादृशोभयाभावाधिकरणतायाः सत्त्वात् इति न पाषाणमयत्वविशिष्टपर्वतविषयकनिश्चयोत्तरानु-मितित्वव्यापकविरोधिविषयताप्रयुक्तोभयाभावाधिकरणताकत्वम् इति न पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिः। निर्वह्निः पर्वतो वह्निमान् धूमात् इत्यत्र वह्निमत्पर्वतरूपाश्रयासिद्धिविषयक-निश्चयोत्तरानुमितिनिष्ठा या तादृशोभयाभावाधिकरणता सापि निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वव्यापकस्य पर्वतत्वा-वच्छिन्ने वह्न्यभावावगाहित्वस्य अभावप्रयोजिका या वह्निमत्पर्व-तविषयता तत्प्रयोज्या भवति व्यापकाभावप्रयोज्यत्वस्य अवश्यं व्याप्याभावे सत्त्वात्।

ननु निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वव्यापिका न अनाहार्य्यज्ञानीयपर्वतत्वावच्छिन्नविषयतानिरूपितवह्न्यभाव-विषयता निर्वह्निः पर्वत इति ज्ञानीयवह्न्यभावप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यतायां वह्निप्रकारत्वानिरूपिततया आहा-र्य्यज्ञानावृत्तित्वात्। नच निर्वह्निः पर्वतो वह्निमान् इति ज्ञानस्य प्रत्यक्षरूपतया उपनयसन्निकर्षमर्य्यादया निर्वह्निः पर्वतो वह्नि-मान् निर्वह्निपर्वतश्च इत्याकारकसमूहालम्बनप्रत्यक्षे बाधका-भावात् आहार्य्यज्ञानवृत्तित्वमपि तादृशविषयतायामक्षतमेवेति वाच्यम्। यत्र च पर्वतो वह्निमान् इति बाधनिश्चयो वर्त्तते, तदुत्तरं निर्वह्निपर्वतत्वविशिष्टे वह्निज्ञानं जायतामितीच्छा, तदुत्तरं निर्वह्निः पर्वतो वह्निमान् इत्येव ज्ञानं जायते, न तु समूहालम्बनतया निर्वह्निः पर्वतो वह्निमान् पर्वतश्च निर्वह्निरिति ज्ञानं केवलं पर्वतत्वावच्छिन्ने वह्न्यभाववत्ताबुद्धिं प्रति पर्वतत्वा-वच्छिन्ने वह्न्यभावप्रकारकनिश्चयेच्छाविरहविशिष्टपर्वतधर्मिक-

वह्निमत्तानिश्चयाभावस्य जनकत्वात् तदभावस्य तत्रासत्त्वात् । तथा च निर्वह्निः पर्वत इति ज्ञानीया या प्रतिबध्यतावच्छेदकी-भूतविषयता तस्याः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वव्या-पकत्वविरहात् कथं वह्निमत्पर्वतविषयताया व्यापकाभावप्रयो-जकतया व्याप्याभावप्रयोजकत्वमिति चेन्न । व्यापकतावच्छेद-कावच्छिन्नाभावप्रयोजकस्य वह्निमत्पर्वतविषयकत्वस्य एव व्या-प्याभावप्रयोजकत्वात् । तथा च पर्वतत्वावच्छिन्ने वह्न्यभावाव-गाहितात्वस्य निर्वह्निपर्वतत्वविशिष्टे वह्न्यवगाहिताव्यापकताव-च्छेदकतया तदवच्छिन्नाभावप्रयोजकस्य वह्निमत्पर्वतविषयत्वस्य निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्र-योजकत्वमक्षतमिति ।

मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय स्वविषयताप्र-योज्यविशिष्टान्तरविषयत्वाप्रयोज्योभयाभावप्रयोजकाभावाधिक-रणताकत्वं भट्टाचार्य्येण निवेशितम् । उभयाभावप्रयोजकाभावा-धिकरणतायां विशिष्टान्तरविषयत्वाप्रयोज्यत्वमात्रोक्तौ यदनुमि-त्यव्यवहितपूर्वं ह्रदे वह्न्यनुमितिसामग्री नास्ति वह्न्यभाववद्ध्रदवि-षयकनिश्चयोऽपि नास्ति तदनुमितिनिष्ठोभयाभावप्रयोजिकाया अभावाधिकरणताया ह्रदधर्मिकवह्न्यनुमितिसामग्र्यभावमात्रप्र-योज्याया विशिष्टान्तरविषयित्वाप्रयोज्यत्वात् विशिष्टान्तरविष-यित्वाप्रयोज्यतदधिकरणताकमेयत्वविशिष्टवह्न्यभाववद्ध्रदे अति-व्याप्तिर्दुर्वारैव । अतः स्वविषयताप्रयोज्यत्वदलम् । तथा च अनुमितिसामग्र्यभावमात्रप्रयोज्यायां तादृशाधिकरणतायां मेय-त्वविशिष्टवह्न्यभाववद्ध्रदविषयित्वाप्रयोज्यत्वान्न स्वपदेन मेयत्व-विशिष्टवह्न्यभाववद्ध्रदोपादानसम्भवः ।

ननु विषयताप्रयुक्तत्वनिवेशेनैव सामग्र्यभावमात्रप्रयोज्यो-भयाभावप्रयोजकाभावाधिकरणतामादाय अतिव्याप्तिवारणस-

भ्रमत्वविषयताप्रयोज्यत्वनिवेशनं व्यर्थमिति वाच्यम्। एवमपि पर्वतो धूमवान् वह्नेरित्यत्र पर्वतत्वसामानाधिकरण्येन धूमस्य साध्यतायां तत्र पर्वतत्वावच्छेदेन धूमाभावनिश्चयोत्तरानुमितौ या तादृशोभयाभावप्रयोजकप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्या मेयत्वविशिष्टधूमव्यभिचारिवह्नित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद् व्यभिचारित्वं तदवच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वात् भ्रमीयबाधविषयताप्रयोज्यत्वाच्च पर्वतत्वावच्छेदेन धूमाभावाप्रसिद्ध्या विशिष्टान्तरपदेन बाधमुपादाय तादृशाधिकरणतायां न विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वसम्भवः। स्वविषयताप्रयोज्यत्वदलनिवेशे च भ्रमविषयताप्रयोज्यतादृशाभावाधिकरणतायां न मेयत्वविशिष्टव्यभिचारविषयताप्रयोज्यत्वमिति न मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः।

न च धूमव्यभिचारिवह्निर्धूमवान् वह्नेरित्यादौ मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयताप्रयोज्याया मेयत्ववान् धूमाभाववान् धूमव्यभिचारिवह्निश्च मेयत्ववान् इति ज्ञानोत्तरानुमितिनिष्ठायाः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताया मेयत्वावच्छेदेन धूमाभावाप्रसिद्ध्या विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वेन मेयत्वविशिष्टधूमव्यभिचारिवह्नावतिव्याप्तितादवस्थ्यात्। यद्विषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्तयदभावाधिकरणताप्रयुक्तोभयाभावाधिकरणता स्वविषयताप्रयुक्तविशिष्टान्तरविषयित्वाप्रयोज्यतदभावाधिकरणताकत्वमेव विवक्षणीयम्। तथाच मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयकनिश्चयोत्तरानुमितिसामान्ये पक्षे साध्यव्याप्यहेत्ववगाहित्वाभावाधिकरणताप्रयुक्त एव निरुक्तोभयाभावः। एवञ्च पर्वतो धूमवान् वह्नेरित्यादौ पर्वतत्वावच्छेदेन

धूमवत्त्वनिश्चयोत्तरानुमितिनिष्ठायाः प्रकृतपक्षे साध्यवैशिष्ट्याव-
गाहित्वाभावाधिकरणताया विशिष्टान्तरविषयत्वाप्रयोज्यत्वेऽपि
मेयत्वविशिष्टधूमव्यभिचारिवह्निविषयकनिश्चयोत्तरानुमितिसा-
मान्ये तादृशोभयाभावो व्याप्त्यवगाहित्वाभावप्रयुक्त एव। तादृ-
शव्याप्त्यवगाहित्वाभावाधिकरणतायां विशिष्टान्तरशुद्धव्यभिचार-
विषयत्वाप्रयोज्यत्वविरहेणातिव्याप्तिविरहात् कथं स्वपदोपादा-
नमिति वाच्यम्। एवमपि पर्वतो वह्न्यभाववान् ह्रदश्च पर्वत
इतिज्ञानोत्तरानुमितिनिष्ठा या पक्षे साध्यवैशिष्ट्यावगाहित्वा-
भावाधिकरणता भ्रमीयविषयतामात्रप्रयोज्या तस्या विशिष्टा-
न्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वात् ह्रदो वह्निमान्
धूमात् इत्यादौ मेयत्वविशिष्टवह्न्यभाववद्ध्रदेऽतिव्याप्तिः। अतः
केवलं विषयतामपहाय स्वविषयताप्रयोज्यत्वनिवेशनम्।

विशिष्टान्तरविषयत्वाप्रयोज्यस्वविषयताप्रयोज्योभयाभावप्र-
योजकाधिकरणतामात्रनिवेशे ह्रदो वह्निमान् इत्यत्र मेयत्व-
व्याप्यवद्वह्न्यभाववद्ध्रदेऽतिव्याप्तिः। वह्न्यभाववद्ध्रदो मेयत्वव्याप्य-
वान् इति परामर्शीया या विषयता तत्प्रयोज्यत्वस्य वह्न्यभावव-
द्ध्रदो मेयत्ववान् इत्यनुमितिनिरूपिताया वह्न्यभाववद्ध्रदविषय-
तायाः प्रतिबन्धकतावच्छेदकविषयतात्वेन उभयाभावप्रयोजिका-
यास्तस्याः सत्त्वेन विशिष्टान्तरविषयत्वाप्रयोज्यत्वेन च तद्विष-
यत्वाधिकरणत्वस्य मेयत्वव्याप्यविशिष्टवह्न्यभाववद्ध्रदेऽपि सत्त्वात्।

न च यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये
विशिष्टान्तरविषयितात्वव्यापकरूपानवच्छिन्ना या विरोधिवि-
षयतानिष्ठप्रयोजकता तन्निरूपितप्रयोज्यत्वविशिष्टं यत् तादृशो-
भयाभावाधिकरणत्वं तद्रूपवत्त्वमेव लक्षणम्। तद्रूपवत्त्वस्यैव
लक्षणे मेयत्वविशिष्टव्यभिचारवारणं सम्भवति। तथा हि मेय-
त्वविशिष्टव्यभिचारविषयकनिश्चयोत्तरानुमितिनिष्ठा या तादृशो-

भयाभावाधिकरणता तस्यां विशिष्टान्तरव्यभिचारविषयतात्व-व्यापकरूपव्यभिचारविषयतात्वेन मेयत्वविशिष्टव्यभिचारविषयताप्रयोज्यतया न विशिष्टान्तरविषयितात्वव्यापकरूपानवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वम्।

एवञ्च स्वतन्त्रविशिष्टान्तरघटितत्वनिवेशनं व्यर्थमेव किन्तु विरोधिविषयतायां मुख्यविशेष्यतात्मकत्वमवश्यं निवेशनीयम्। अन्यथा व्यभिचारविषयिताया धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयतात्वेनैव वह्नित्वावच्छिन्नविषयतानिरूपितधूमाभाववद्वृत्तित्वप्रकारताया अपि वह्नित्वावच्छिन्नविशेष्यतानिरूपितधूमाभाववद्वृत्तित्वप्रकारतात्वेन प्रयोजकतया तादृशप्रकारतात्वस्य विशिष्टान्तरविषयतात्वव्यापकत्वविरहात् तादृशप्रकारतानिष्ठप्रयोजकताया विशिष्टान्तरविषयितात्वव्यापकरूपानवच्छिन्नतया तादृशप्रकारतानिष्ठप्रयोजकतानिरूपितप्रयोज्यत्वं मेयत्वविशिष्टव्यभिचारविषयकनिश्चयोत्तरानुमितिसामान्यवृत्त्युभयाभावाधिकरणतायां सत्त्वेऽपि न मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरिति वाच्यम्। यत्र ह्रदत्वावच्छेदेन वह्निः साध्यता तत्र ह्रदत्वव्यापकत्वविशिष्टवह्न्यभावप्रतियोगिकविशेषणताविशेषेण वह्न्यभाववद्ध्रदस्य दोषत्वम्।

एवं केवलविशेषणताविशेषसम्बन्धेन वह्न्यभाववद्ध्रदस्यापि दोषत्वम्। तत्र ह्रदत्वावच्छेदेन वह्न्यभावेऽव्याप्तिः। तथा हि ह्रदत्वावच्छेदेन वह्न्यभावावगाहिनिश्चयोत्तरानुमितिनिष्ठह्रदत्वावच्छेदेन वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावाधिकरणतायां ह्रदत्वावच्छेदेन वह्निवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं यत् वह्न्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतात्वं तेन रूपेण ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकविशेषणताविशेषसम्बन्धावच्छिन्नवह्न्यभावप्रकार-

तानिरूपितह्रदत्वावच्छिन्नविशेष्यतायां ह्रदत्वावच्छेदेन वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजकतया न तादृशोभयाभावाधिकरणतायां विशिष्टान्तरविषयितात्वव्यापकरूपानवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्य सम्भवः।

एवं घटो विशेषगुणाभावगुणसामान्याभावोभयवान् इत्यादौ विशेषगुणवद्घटो बाधः। तत्रानुमितौ विशेषगुणाभावप्रकारकबुद्धित्वावच्छिन्ना एवं गुणसामान्याभावप्रकारकबुद्धित्वावच्छिन्ना चापरा प्रतिबध्यता। तथा च तादृशप्रतिबध्यताभेदेन प्रतिबन्धकतापि गुणवद्घटविषयकनिश्चये विशेषगुणवद्घटविषयकनिश्चयेऽपि भिन्नाभिन्ना भवति इत्युभयस्यैव दोषत्वं तत्र विशेषगुणवद्घटेऽव्याप्तिः। विशेषगुणवद्घटविषयकनिश्चयोत्तरानुमितिसामान्ये या तादृशोभयाभावाधिकरणता तस्या गुणवद्घटरूपविशिष्टान्तरविषयतात्वव्यापकगुणत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयतात्वेनैव अवच्छिन्ना या प्रयोजकता तन्निरूपितप्रयोज्यत्वमेव स्वीक्रियते न तु विशेषगुणत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयतात्वेन अवच्छिन्ना प्रयोजकता तन्निरूपितप्रयोज्यत्वान्तरमपि गौरवात्।

तथा च विशेषगुणवद्घटविषयकनिश्चयोत्तरानुमितिनिष्ठोभयाभावाधिकरणताया न विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वसम्भवः। स्वविषयताप्रयोज्यविशिष्टान्तर-विषयत्वाप्रयोज्योभयाभावाधिकरणताकनिवेशे च ह्रदत्वावच्छेदेन वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजिका यथा ह्रदत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवह्निवैशिष्ट्यावगाहित्वाभावाधिकरणता तथा ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगत्वावच्छिन्नसंसर्गतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वसामान्याभावेऽपि। एवं विशेषगुणाभाव-

गुणाभावोभयवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजिका घट-विशेष्यगुणाभावप्रकारकत्वसामान्याभावाधिकरणतापि। तयोश्च प्रत्येकं ह्रदत्वसामानाधिकरण्येन वह्न्यभावरूपविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वह्रदत्वावच्छेदेन वह्न्यभावप्रयोज्यताया एव गुणवद्घटरूपविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वविशेषगुणवद्घटरूपविषयतायाश्च प्रयोज्यतायाः सत्त्वात् उक्तस्थले ह्रदत्वावच्छेदेन वह्न्यभावरूपबाधे विशेषगुणवद्घटरूपबाधे च नाव्याप्तिः।

स्वविषयताप्रयोज्यविशिष्टान्तरविषयित्वाप्रयोज्योभयाभावाधिकरणताकत्वमात्रनिवेशे धूमवान् धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र बाधेऽव्याप्तिः। बाधविषयताप्रयोज्याया निरुक्तोभयाभावाधिकरणताया व्यभिचाररूपविशिष्टान्तरविषयताप्रयोज्यत्वनियमात्। अत उभयाभावप्रयोजकाभावाधिकरणतायां स्वविषयताप्रयोज्यविशिष्टान्तरविषयत्वाप्रयोज्यनिवेशनं भट्टाचार्य्येण कृतम्। तथा च उभयाभावप्रयोजिका या पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्यां व्यभिचारविषयतात्वव्यापकरूपेण व्यभिचारविषयताया अप्रयोज्ययोजकतया व्यभिचाररूप-विशिष्टान्तर-विषयतात्व-व्यापकरूपावच्छिन्नाप्रयोज्यत्वं तत्रास्त्येव।

न च यत्र धूमव्यभिचारिवह्निमान् धूमाभाववान् इति बाधनिश्चयोत्तरं धूमव्यभिचारिवह्निमान् धूमव्याप्यवह्निमान् इत्याहार्य्यनिश्चयः तज्ज्ञाननिष्ठा या उभयाभावाधिकरणता तस्याश्च न व्यभिचारविषयतायाः प्रयोजकत्वं किन्तु बाधविषयतात्वेनैव इति तदधिकरणतामादायैव स्वविषयताप्रयोज्यविशिष्टान्तरविषयित्वाप्रयोज्योभयाभावाधिकरणताकत्वं व्यभिचारघटितबाधे स्यास्यतीति तादृशोभयाभावप्रयोजिकाभावाधिकरणतापर्य्यन्त-

निवेशनं विफलमिति वाच्यम् । यादृशव्यभिचारघटितबाधविषयकज्ञानान्तरं पक्षे साध्यव्याप्यहेतुवैशिष्ट्यावगाहि आहार्य्यज्ञानं न जातं तादृशव्यभिचारघटितबाधानन्तरज्ञाने निरुक्तोभयाभावाधिकरणताया व्यभिचाररूपविशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वनियमात् तादृशव्यभिचारघटितबाधे अव्याप्तिवारणार्थमेव उभयाभावप्रयोजकाभावाधिकरणताकत्वपर्य्यन्तानुधावनम् । एवं ह्रदो वह्निमान् धूमात् इत्यत्र ह्रदत्वावच्छेदेन वह्नेः साध्यता यत्र, तत्र ह्रदत्वावच्छेदेन वह्न्यभावस्य दोषत्वानुपपत्तिः । ह्रदत्वावच्छेदेन वह्न्यभावनिश्चयोत्तरोभयाभावाधिकरणताया ह्रदत्वसामानाधिकरण्येन वह्न्यभावरूपविशिष्टान्तरविषयताप्रयोज्यत्वनियमात् । अतस्तादृशानुधावनमिति चिन्त्यम् ।

ननु धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमाभाववद्धूमव्यभिचारिवह्निमद्विषयकनिश्चयोत्तरानुमितिनिष्ठोभयाभावप्रयोजकाभावाधिकरणतायां बाधविषयतान्तःपातित्वेन विशिष्टान्तरव्यभिचारविषयताप्रयोज्यतया विशिष्टान्तरयत्किञ्चिद्विषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वं भट्टाचार्य्येण निवेशितम् । अत्रेदं बोध्यम् । यद्यपि ह्रदो वह्निमान् धूमात् इत्यादावपि वह्न्यभाववद्ध्रदादिरूपबाधविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणतायां वह्न्यभावादिरूपविशिष्टान्तरविषयिताया अपि बाधविषयितान्तःपातिविषयितात्वेन प्रयोजकतया विशिष्टान्तरविषयितात्वव्यापकत्वानिवेशे असम्भव एव दातुमुचितः तत्रापि यद्विषयकनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावः तादृशविशिष्टान्तरविषयित्वाप्रयोज्यत्वनिवेशे वह्न्यभावादिविषयताप्रयोज्यत्वस्य वह्न्यभाववद्ध्रदविषयिताप्रयोज्यत्वस्य च निरुक्तोभयाभावप्रयोजकाभावाधिकरणतासत्त्वेऽपि न

वह्न्यभाववद्ध्रदादौ लक्षणासङ्गतिः। केवलवह्न्यभावविषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावविरहात् विशिष्टान्तरपदेन केवलवह्न्यभावस्य धर्त्तुमशक्यत्वात्। धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमव्यभिचारिवह्निमद्विषयकनिश्चयोत्तरानुमितिसामान्ये एव तादृशोभयाभावसत्त्वात् तादृशविशिष्टान्तरपदेन व्यभिचारस्य धर्त्तुं शक्यतया व्यभिचारादिकमादाय धूमाभाववद्धूमव्यभिचारिवह्निमति अव्याप्तिवारणार्थं विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशनमावश्यकमिति।

ननु वह्न्यादिधर्मिकव्याप्तिग्रहं प्रति धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वमावश्यकं वाच्यम्। अन्यथा जातिमान् धूमाभाववद्वृत्तिरिति ज्ञानोत्तरमपि वह्निधर्मिकधूमव्याप्तिग्रहानुत्पादप्रसङ्गात्। एवञ्च मेयत्वविशिष्टधूमव्यभिचारिवह्नावतिव्याप्तिवारणं दुःशक्यम्। तथा हि तत्र विशिष्टान्तरं यत् धूमव्यभिचारिवह्न्यादि तद्विषयतात्वव्यापकं न धूमाभाववद्वृत्तित्वप्रकारतानिरूपितनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविशेष्यतात्वम्। जातिमान् धूमाभाववद्वृत्तिरिति ज्ञानीयविषयतायां व्यभिचारात्। किन्तु धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यतात्वमेव। तादृशञ्च रूपं न शुद्धवह्नित्वावच्छिन्नधर्मिकव्याप्तिग्रहप्रतिबन्धकतावच्छेदकम् इति न तदवच्छिन्नप्रकारतानिरूपितप्रयोज्यत्वस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्त्वसम्भवः।

तथा च कथं मेयत्वविशिष्टव्यभिचारे अतिव्याप्तिवारणमिति विशिष्टान्तरविषयित्वाव्यापकीभूतविषयताशून्यज्ञानीयविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वमेव निवेशनीयम्।

तथा च धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयितात्वाव्यापकी-भूतविषयिताशून्यं विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्ना-प्रयोज्यत्वमेव। न जातिमान् धूमाभाववद्वृत्तिर्वह्निरिति ज्ञानं किन्तु धूमाभाववद्वृत्तिवह्निरिति ज्ञानमेव। तज्ज्ञानवृत्तिधूमाभाववद्वृ-त्तिवह्नित्वावच्छिन्नविषयितात्वव्यापकं धूमाभाववद्वृत्तित्वप्रका-रतानिरूपितवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकविशेष्यतात्व-मपि। तद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्य व्याप्ति-विशिष्टवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्त्वात् न मेयत्व-विशिष्टव्यभिचारादावतिव्याप्तिः।

एवञ्च विशिष्टान्तरविषयत्वाव्यापकीभूतविषयताशून्यज्ञानी-यविषयतानिष्ठप्रयोजकतानिरूपितप्रयोज्यत्वस्य अभावविवक्षणे धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र बाधेन अव्याप्ति-रिति व्यभिचाररूपविशिष्टान्तरविषयित्वाव्यापकीभूतविषयिता-शून्यज्ञानं धूमव्यभिचारिवह्निमान् धूमाभाववान् इति बाधविष-यकज्ञानं किन्तु धूमव्यभिचारिवह्निरिति केवलव्यभिचारविष-यकं ज्ञानं तदीयविषयिता तु न प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्या-वगाहिप्रत्यक्षप्रतिबन्धकतावच्छेदिकेति। तन्निष्ठप्रयोजकतानिरू-पितप्रयोज्यत्वाभावस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकर-णतायां सत्त्वात् तादृशयत्किञ्चिद्विशिष्टान्तरविषयतात्वनिवेशन-मफलम्।

न चैवं मेयत्वविशिष्टधूमव्यभिचारिवह्नावतिव्याप्तिः मेयत्व-विशिष्टधूमव्यभिचारिवह्निविषयकनिश्चयोत्तरानुमितिनिष्ठा या उभयाभावप्रयोजकाधिकरणता धूमव्यभिचारिवह्निरूपविशिष्टा-न्तरविषयतात्वव्यापकीभूतविषयताशून्यधूमव्यभिचारवह्निः इ-त्याकारकज्ञानीयविषयताया मेयत्वविशिष्टधूमव्यभिचारीतिज्ञा-नाकलितया तादृशविषयत्वाप्रयोज्यत्वात् अपूर्ववर्त्तिज्ञानीयविष-

यताया एव स्वोत्तरवर्त्तिज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभाव-प्रयोजकत्वादिति वाच्यम्। एवमपि विशिष्टान्तरविषयित्वाव्यापकीभूतविषयताशून्यज्ञानीयविषयतावृत्तिरूपपर्य्याप्त्यवच्छेदकताकप्रयोजकतानिरूपितप्रयोज्यत्वाभावविवक्षणे अतिव्याप्तिवारणं सम्भवति। केवलं धूमव्यभिचारिवह्निरितिज्ञानीया या विषयता तद्वृत्तिर्यद्धूमाभाववद्वृत्तित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविषयतात्वं तेन रूपेणैव मेयत्वविशिष्टधूमव्यभिचारिवह्निविषतायाः तदनन्तरज्ञाननिष्ठोभयाभावप्रयोजकाभावाधिकरणतायां प्रयोजकत्वात् इति चेन्न। सामान्यतो विशिष्टान्तरविषयत्वाव्यापकीभूतविषयताशून्यग्रहस्यापि विषयताशून्यग्रहस्यापि प्रसिद्धिरिति विशिष्टान्तरविषयताया घटादिज्ञानेऽपि सत्त्वात्। तत्र च व्यभिचारविषयताया अभावत्वात् व्यभिचारविषयताया अभावात् व्यभिचारविषयताया अपि विशिष्टान्तरविषयत्वाव्यापकत्वेन तच्छून्यत्वस्य व्यभिचारविषयकज्ञानेऽप्यभावात् किन्तु स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यद्यद्रूपं प्रातिस्विकरूपेण तत्तद्रूपावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यज्ञानवृत्तिविषयतानिष्ठधर्मपर्य्याप्त्यवच्छेदकताप्रयोजकतानिरूपितप्रयोज्यत्वाभावकूट एव निवेशनीयः।

तथा च मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः व्यभिचारविषयत्वाव्यापकीभूतविषयताशून्यज्ञानवृत्तिविषयतानिष्ठधर्मपर्य्याप्त्यवच्छेदकताकप्रयोजकतानिरूपितप्रयोज्यत्वस्य मेयत्वविशिष्टव्यभिचारविषयकज्ञानोत्तरज्ञाननिष्ठोभयाभावप्रयोजकाभावाधिकरणतायाम् अक्षतत्वात्। एवञ्च घटाभाववद्भूतलविषयत्वाप्रयोज्यत्वस्य पटाभाववद्भूतलविषयत्वाप्रयोज्यत्वस्य प्रातिस्विकरूपेण निवेशः कर्त्तव्यः। तदपेक्षया स्वावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यज्ञानवृत्तिः या स्वावच्छिन्नविषयकप्रतीति-

विषयतावच्छेदकीभूतधर्मावच्छिन्नविषयता तत्प्रयोज्यत्वाभाव एव निवेशनीयः। तथा च घटाभाववद्भूतलविषयतायाः स्वावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यज्ञानवृत्तित्वविरहात् न तदप्रयोज्यत्वस्य न तादृशकूटान्तर्गतत्वम्। एवञ्च धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्विषयत्वाव्यापकीभूतविषयताशून्यज्ञानीया या धूमव्यभिचारिवह्नित्वावच्छिन्नविषयता तस्याः साध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकतया पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकत्वेन धूमाभाववद्धूमव्यभिचारिवह्निमति व्याप्तिः। अतो व्यापकत्वनिवेशनमिति।

यत्तु गगनम् अभावाप्रतियोगि गगनात् इत्यादौ अभावाप्रतियोगित्वव्यापकीभूताभावप्रतियोगिगगनरूपासाधारण्ये बाधघटितेऽव्याप्तिः। तज्ज्ञानानन्तरज्ञाननिष्ठतादृशसाध्यावगाहित्वाभावाधिकरणतायां बाधरूपविशिष्टान्तरविषयित्वप्रयोज्यत्वादिति। तत्तुच्छम्। साध्यवत्ताबुद्धौ अभावप्रतियोगित्वनिश्चयत्वेन प्रतिबन्धकत्वं न तत्र ज्ञानविशिष्टज्ञानत्वेन बाधविषयकज्ञानस्य प्रतिबन्धकत्वमिति तस्यालक्ष्यत्वात् स्वातन्त्र्येण दूषकत्वाभावेन दोषत्वस्वीकारस्य अयुक्तत्वात् व्यभिचारघटितबाधादेश्च स्वातन्त्र्येण दूषकत्वात् तत्संग्रहप्रकारस्य आवश्यकत्वात्।

अथ साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपासाधारण्येऽव्याप्तिः। पक्षवृत्तिर्हेतुरिति ज्ञानकालीनासाधारण्यज्ञानोत्तरजायमानज्ञाननिष्ठसाध्यावगाहित्वाभावाधिकरणतायां स्वविषयिताप्रयोज्यत्वविशिष्टान्तररूपहेतुमत्पक्षविषयिताप्रयोज्यत्वस्य आवश्यकत्वात्। न च तादृशविशिष्टान्तरविषयित्वाप्रयोज्यत्वं वक्तव्यम् केवलहेतुमत्पक्षादिकञ्च न तथेति वाच्यम्। जलाभाव-

वह्न्यादकालीनवह्नेः साध्यतास्थले जलवह्न्यादरूपहेतुमत्पक्षस्य तादृशतया तत्र वह्निव्यापकीभूताभावप्रतियोगिजलरूपे असाधारण्ये अव्याप्तिः। एवं यद्विषयकनिश्चय इत्यादिदलानाक्रान्तत्वाच्च न तत्रापि यद्विषयकनिश्चये पक्षधर्मिके हेतुमत्ताज्ञानकालीनत्वं देयमिति न दोष इति वाच्यम्। यद्विषयकनिश्चये अनाहार्य्यत्वस्य आवश्यकतया स्वरूपासिद्ध्यादावव्याप्तेः। तस्मात् पक्षवृत्तित्वाघटितमेव असाधारण्यमित्यस्य विरोध इति चेन्न। पक्षवृत्तित्वाघटितमेव असाधारण्यम्। परन्तु तन्निश्चयोत्तरम् अनाहार्य्यहेतुमदवगाहिसाध्यावगाहिज्ञानानुत्पत्त्या तादृशानुमितौ उभयाभावसत्त्वात् तादृशाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वस्य च सत्त्वात् अनुपपत्त्यभावात्। एतेन विशेष्यदलसत्त्वनिर्वाहकं यद्विषयकनिश्चये हेतुमत्पक्षनिश्चयाकालीनत्वासाधारण्यविषयकत्वोभयाभावनिवेशनमुपादेयमेवेति निरस्तम्।

विशिष्टान्तरविषयित्वाप्रयोज्यत्वञ्च ज्ञानवैशिष्ट्याप्रयोज्यत्वे सति यद्विशिष्टान्तरविषयित्वाप्रयोज्यत्वं तदभाव इति नासाधारण्यासंग्रहः। एवञ्च वह्न्यभाववज्जलादिमद्वृत्तिजलवह्न्यादवारणाय विशिष्टद्वयाघटितत्वमावश्यकम्। वस्तुतो विशिष्टान्तरविषयितात्वव्यापकरूपानवच्छिन्नविषयितानिष्ठप्रयोजकताकत्वनिवेशनकल्पे नानुपपत्तिलेशोऽपि। न वा तादृशविशिष्टद्वयाघटितत्वमपीति। अथात्र कल्पे हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वस्य असाधारण्यादिरूपस्य कथं संग्रहः। साधने साध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयोत्तरपक्षतावच्छेदकमेव धर्मं धर्मितावच्छेदकीकृत्य साध्यसाधनोभयप्रकारकानाहार्य्यज्ञानानुत्पत्त्या निरुक्तासाधारण्यादिविषयकनिश्चयोत्तरानुमितिसामान्यनिरुक्तोभयाभावाधिकरणतासत्त्वेऽपि तन्निश्चयोत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्तत्वविशिष्टतादृशोभयाभावा

धिकरणताविरहात् स्वपूर्ववर्त्ति प्रतिबन्धकीभूतज्ञानविषयित्व-स्यैव प्रयोजकतया हेतुमत्ताज्ञानकालीनतादृशसाधारण्यज्ञान-विषयिताया अप्रयोजकत्वादिति चेत् हेतुमत्पक्षज्ञानाकालीनत्वासाधारण्यविषयकत्वोभयाभाववैशिष्ट्यं यद्विषयकनिश्चये विशेषणीकृत्य संग्रहात्। असाधारण्यविषयकस्य पक्षधर्मताज्ञानकालीननिश्चयस्य निरुक्तोभयाभाववत्तया तदुत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्ततादृशावगाहित्वद्वयाभावाधिकरणताकसत्त्वात् इति स्वरूपासिद्धिनिश्चयस्य पक्षधर्मज्ञानकालीनस्यापि निरुक्ताभावविशिष्टानाहार्यस्याप्रसिद्ध्या अव्याप्तिवारणाय असाधारण्यविषयकत्वमित्यपि मदेकपरिशीलितः पन्थाः।

न च तथापि निरुक्तासाधारण्यविषयताप्रयुक्तनिरुक्तोभयाभावप्रयोजकाभावाधिकरणतायां नियमतो हेतुमत्पक्षरूपविशिष्टान्तरविषयिताप्रयुक्तत्वसत्त्वेन विशिष्टान्तराघटितत्वस्य निरुक्तासाधारण्ये विरहात् तत्राव्याप्तिरिति वाच्यम्। असाधारण्यविषयितात्वावच्छिन्नानिरूपितत्वज्ञानवैशिष्ट्यप्रयोज्याधिकरणतावृत्तित्वोभयाभावस्य विशिष्टान्तरविषयिताप्रयोज्यतायां निवेशेन सामञ्जस्यात्।

अथ तादृशाधिकरणतानिष्ठप्रयोज्यत्वं प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणघटकयावद्भिर्निरूपितमेकमेव न तु नाना कथं विशिष्टान्तरविषयिताप्रयोज्यतायां तादृशोभयाभावनिवेशेन असाधारण्यसंग्रह इति चेत् तथा सति तादृशप्रयोज्यत्वानिरूपितहेतुमत्पक्षादिविषयितानिष्ठा च प्रयोजकता नानैव अवच्छेदकभेदात्। तासां भिन्नानामपि तत्प्रयोज्यतानिरूपितप्रयोजकतात्वेन व्यासज्यवृत्तितया मह्यानसीयवह्न्यभावप्रतियोगितावच्छेदकतावत्पर्य्याप्तिरैक्येन तावद्भेदेन न प्रयोज्यताभेदः। एवञ्च ज्ञानवैशिष्ट्यप्रयोज्यत्वनिरूपितत्वासाधारण्यविषयितात्वानवच्छि-

न्यत्वोभयाभाववती या विशिष्टान्तरविषयितात्वव्यापकरूपाव-च्छिन्नप्रयोजकता तन्निरूपिते प्रयोज्यताभावस्य विशिष्टान्तरवि-षयित्वाप्रयोज्य इत्यनेन विवक्षितत्वात् हेतुमत्पक्षविषयितानिष्ठ-तादृशप्रयोजकतायाश्च तादृशोभयवत्त्वादिति।

अथ ह्रदो वह्निमान् वह्निमद्वृत्तिजलात् इत्यादौ साधना-प्रसिद्धगात्मकवह्निमदवृत्तिजलेन घटिते मेयत्वविशिष्टे तत्रातिव्याप्तिः। वह्निमदवृत्ति जलं प्रमेयं जलवान् ह्रद इति ज्ञानोत्तर-घटाद्यनुमितिनिष्ठप्रमेयत्वविशिष्टतादृशजलविषयिताप्रयुक्तपक्षध-र्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायास्तदघटकीभूत-वह्निमदवृत्तिजलविषयिताप्रयोज्यत्वसत्त्वेऽपि तत्प्रयोज्यत्वानि-रूपिततादृशविषयितानिष्ठप्रयोजकतायां ज्ञानवैशिष्ट्यप्रयोज्यता-निरूपितत्वासाधारण्यादिविषयतात्वानवच्छिन्नत्वोभयवत्त्वेन ता-दृशोभयाभाववद्विशिष्टान्तरविषयितानिष्ठप्रयोजकतानिरूपितप्र-योज्यताविरहस्य तादृशाधिकरणतायामक्षतत्वेन तामादाय विशिष्टान्तराघटितत्वसत्त्वात्।

एवं ह्रदो वह्निमान् धूमात् इत्यादौ वह्न्यभाववज्जलवद्वृत्ति-जलवद्ध्रदेऽतिव्याप्तिः तदघटकीभूतवह्न्यभाववज्जलादिरूपविशि-ष्टान्तरविषयितानिष्ठतादृशाधिकरणताप्रयोजकताया उभयव-त्त्वात्। न च असाधारण्यविषयिताप्रयुक्ताधिकरणताप्रयोजक-त्वासाधारण्यविषयत्वान्यत्वोभयाभाव एव विषयितायां निवेश-नीयः न तु प्रयोजकतायाम् उक्तोभयाभावः तथा च नोक्तातिव्याप्तिद्वयावकाश इति वाच्यम्। ह्रदो वह्निमान् धूमात् इत्यादौ मेयत्वविशिष्टबाधे अतिव्याप्तेः। वह्न्यभाववान् ह्रदः प्रमेयः वह्निव्यापकीभूताभावप्रतियोगिधूमवान् ह्रद इति ज्ञानोत्तर-घटाद्यनुमितिनिष्ठपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिक-रणतायां बाधासाधारण्यविषयकत्वयोरेव विनिगमनाविरहेण

प्रयोजकतया ताद्दशोभयवत्त्वादिति। मैवम्। असाधारण्यविषयिताप्रयोज्यतानिरूपितत्वासाधारण्यविषयितात्वानवच्छिन्नत्वोभयाभाववती या विशिष्टान्तरविषयितानिष्ठप्रयोजकता तन्निरूपितप्रयोज्यत्वाभावस्य विशिष्टान्तरविषयित्वाप्रयोज्यत्वेनेन विवक्षणादिति।

नव्यास्तु असाधारण्यसंग्रहाय वरम् असाधारण्यविषयताभिन्नत्वताद्दशोभयाभाववद्वृत्तिभिन्नत्वोभयाभावविशिष्टविषयतावच्छेदकत्वं लक्ष्यतावच्छेदके विशेषणं देयम्। विषयतायां ताद्दशोभयाभाववद्वृत्तित्वञ्च स्वावच्छेदकावच्छिन्नविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वसम्बन्धेन ग्राह्यम्। एवञ्च मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणार्थं ताद्दशविषयतायां विशिष्टान्तराघटितत्वविशेषणमपि देयम्। तच्च स्वनिष्ठप्रयोजकतानिरूपितत्वस्वभिन्नयत्किञ्चिद्विषयतात्वव्यापकरूपावच्छिन्नप्रयोजकत्वानिरूपितत्वोभयवत्ताद्दशोभयाभावप्रयोजकाभावाधिकरणतानिष्ठप्रयोज्यतावत्त्वरूपम्। अतो नानुपपत्तिलेशोऽपीति ध्येयम्।

अत्रापि धूमाभाववत्पर्वतकालीनः पर्वतो वह्निमान् धूमात् इत्यादौ आश्रयासिद्ध्यात्मकधूमवत्पर्वते मेयत्वादिविशिष्टेऽतिव्याप्तिः। वह्निव्यापकीभूताभावप्रतियोगिधूमः धूमवान् पर्वतः प्रमेय इतिज्ञानोत्तरजातघटाद्यनुमितिनिष्ठपर्वतधर्मिकवह्निवैशिष्ट्याभावाधिकरणतामादाय विशिष्टान्तराघटितत्वसत्त्वात् धूमवत्पर्वतविषयितानिष्ठताद्दशाधिकरणताप्रयोजकताया असाधारण्यविषयितात्वानवच्छिन्नत्वासाधारण्यविषयिताप्रयोज्यतानिरूपितत्वोभयवत्त्वात्।

यदि च विशिष्टान्तरविषयितानिष्ठप्रयोजकत्वे स्वविषयितानिष्ठप्रयोजकत्वे च उभयत्रैव असाधारण्यविषयित्वानवच्छिन्नत्वासाधारण्यविषयिताप्रयोज्यतानिरूपितत्वोभयाभावं निवेश्य

विशिष्टान्तरविषयितानिष्ठतादृशोभयाभाववत्प्रयोजकतानिरू-पितप्रयोज्यताशून्यस्वविषयितानिष्ठतादृशोभयाभावप्रयोजकता-निरूपितप्रयोज्यतावत्तादृशोभयाभावप्रयोजकाभावाधिकरणता-कत्वमित्युच्यते तदा न कोऽपि दोषः। एवञ्च ज्ञानवैशिष्ट्य-प्रयोज्यतानिरूपितत्वघटितप्रागुपदर्शितोभयाभावस्य उभयप्र-योजकताया निवेशेऽपि साधीयानिति।

अथात्र प्रागुक्तदोषवारणाय स्वविषयितानिष्ठप्रयोजकतायां विशिष्टान्तरविषयितानिष्ठप्रयोजकतायाञ्च ज्ञानवैशिष्ट्यप्रयोज्य-तानिरूपितत्वासाधारण्यविषयित्वानवच्छिन्नत्वोभयाभावनिवेशेन ध्रौव्ये निरुक्तोभयाभावविशिष्टविशिष्टान्तरविषयितात्वव्यापकरू-पानवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभाववत् निरुक्तोभया-भावविशिष्टस्वविषयितात्वव्यापकरूपावच्छिन्नस्वविषयितानिष्ठ-प्रयोजकतानिरूपितप्रयोज्यतावदुभयाभावप्रयोजकीभूताभावाधि-करणताकत्वमित्यस्यैव सम्यक्त्वे विशेष्यदलनिवेशनमफलमिति चेन्न। कपिसंयोगाभाववद्वृत्तिः कपिसंयोगी इत्यत्र कपिसंयोगा-भाववद्वृत्त्यंऽतिव्याप्तिः।

न च यद्विशेष्यकनिश्चयस्य इत्यत्र अव्याप्यवृत्तित्वज्ञानाना-स्कन्दितत्वनिवेशस्य आवश्यकतया अव्याप्यवृत्तित्वज्ञानानास्क-न्दितकपिसंयोगाभाववद्वृत्तविषयकनिश्चयोत्तरानुमितित्वव्याप-कोभयाभावस्य सत्त्वात् तन्निवेशेऽपि तत्रातिव्याप्तिरिति वाच्यम्। अव्याप्यवृत्तित्वभ्रमानास्कन्दितयद्विषयक इत्येव विशेष्यदले निवेश्यतया तत्र अव्याप्यवृत्तित्वभ्रमानास्कन्दिततन्निश्चयोत्तरा-नुमितित्वव्यापकविरोधिविषयताप्रयुक्तत्वविशिष्टोभयाभाववत्त्व-विरहादिति ध्येयम्।

प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तियद्रूपा-वच्छिन्नविषयता तद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमि-

तिसामान्ये निरुक्तोभयाभावस्तद्रूपवत्त्वम् इत्यत्र वदन्तीत्यस्य निष्कृष्टार्थो भट्टाचार्य्येण यत्तु इत्यादिना कृतः। तत्र यद्रूपावच्छिन्नविषयतायां तादृशनिश्चयावृत्तित्वरूपविरोधित्वस्य निवेशात् निर्वह्निः पर्वतो वह्निमान् इत्यत्र घटविषयकनिश्चयोत्तरानुमितिसामान्ये निर्वह्निपर्वतत्वविशिष्टवह्निवैशिष्ठ्यावगाहित्वघटितोभयाभावस्य सत्त्वेऽपि न घटे तादृशस्थले दोषताप्रसङ्गः। निर्वह्निः पर्वतो वह्निमान् घटश्च इति समूहालम्बनज्ञाने घटविषयितायाः सत्त्वेन घटविषयितायास्तादृशनिश्चयावृत्तित्वविरहात्।

अत्र च निश्चयपदानुपादाने ह्रदो वह्निमान् न वा वह्निव्याप्यवान् न वा इति संशयात्मकपक्षे साध्यवैशिष्ठ्यावगाहिसाध्यव्याप्यहेतुवैशिष्ठ्यावगाहिज्ञाने वह्न्यभाववद्ध्रदविषयताया धूमाभाववद्ध्रदविषयतायाश्च सत्त्वेन वह्न्यभाववद्ध्रदरूपबाधे स्वरूपासिद्ध्यादिदोषे च तादृशलक्षणगमनानिर्वाहः। अतो निश्चयपदम्। अथात्र निश्चयत्वं यदि तद्धर्मावच्छिन्नविशेष्यकतदभावाप्रकारकत्वे सति तद्धर्मावच्छिन्नविशेष्यकतत्प्रकारकत्वं तदा निर्वह्निः पर्वतो वह्निमान् इत्यत्र पर्वतधर्मिकवह्न्यभावप्रकारकपर्वतधर्मिकवह्निप्रकारकस्य तादृशाहार्य्यस्यासंग्रहः। नच तद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यकतदभावप्रकारताकान्यत्वं यत् तदेव निश्चयपदेन विवक्षणीयम्। तथा च निर्वह्निः पर्वतो वह्निमान् इत्यत्र वह्निप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्य्याप्त्यधिकरणवह्न्यभावपर्वतत्वोभयमेव तादृशोभयधर्मावच्छिन्नविशेष्यकवह्न्यभावप्रकारकान्यत्वं तादृशनिश्चयेऽक्षतमेव।

अनुगमप्रकारस्तु स्वाश्रयत्वस्वनिरूपितविशेष्यतावच्छेदकतापर्य्याप्त्यधिकरणीभूतधर्मावच्छिन्नविशेष्यतानिरूपितस्वावच्छे-

दकावच्छिन्नप्रतियोगिताकाभावप्रकारताकत्वैतदुभयसम्बन्धेन तद्धर्मावच्छिन्नप्रकारताविशिष्टान्यत्वमिति वाच्यम् । एवं सति नीलह्रदो वह्निमान् इत्यत्र ह्रदत्वावच्छेदेन वह्न्यभावस्य बाधतया तादृशपञ्चकधूमसाध्यकहेतौ च ह्रदत्वावच्छेदेन धूमाभावस्य च स्वरूपासिद्धितया तत्राव्याप्तिः । भट्टाचार्य्यमते यथा सामान्यघटितविशेषधर्मावच्छिन्नसामान्याभावकोटिसंशयो ह्रदो महानसीयवह्निमान् वह्निसामान्याभाववान् वा इत्याकारको जायते । तथा च सामान्यघटितविशेषधर्मावच्छिन्नैककोटिविशिष्टसामान्यधर्मावच्छेदेन चापरकोट्यवगाही नीलह्रदो वह्निमान् ह्रदो वह्न्यभाववान् वा नीलह्रदो वह्निव्याप्यधूमवान् ह्रदो धूमसामान्याभाववान् इत्याकारको जायते ।

तथा च तादृशसंशयस्य वह्नित्वावच्छिन्नप्रकारकत्वसत्त्वेऽपि वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतापर्य्याप्त्यधिकरणीभूतनीलत्वह्रदत्वोभयधर्मावच्छिन्नविशेष्यतानिरूपितवह्न्यभावप्रकारकत्वाभावात् वह्नित्वावच्छिन्नप्रकारकत्वस्य निरुक्तोभयसम्बन्धेन वैशिष्ट्यस्य तत्र असत्त्वात् तादृशज्ञानस्य निरुक्तनिश्चयत्वसत्त्वात् तादृशसंशये च वह्न्यभाववह्रदत्वावच्छिन्नविषयताया वर्त्तमानत्वात् अतः स्वनिरूपकत्वम् । स्वनिरूपितविशेष्यतावच्छेदकतानात्मकस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपकत्वैतदुभयसम्बन्धेन प्रकारकतावदन्यथारूपनिश्चयत्वं निवेशितम् । तथा च निर्वह्निः पर्वतो वह्निमान् इति ज्ञाने वह्नित्वावच्छिन्नप्रकारकत्वेऽपि तादृशप्रकारतानिरूपितविशेष्यतावच्छेदकतानात्मकवह्न्यभावप्रकारतानिरूपकत्वं नास्तीति निरुक्तोभयसम्बन्धेन वह्नित्वावच्छिन्नप्रकारतावैशिष्ट्यान्यत्वं निरुक्ताहार्य्यनिश्चयेऽस्त्येव ।

न च निर्वह्निः पर्वतो वह्निमान् इतिज्ञाने वह्न्यभावे यथा वह्निप्रकारतानिरूपितविशेष्यतावच्छेदकता वर्त्तते तथा पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधर्मितावच्छेदकतानात्मकप्रकारता वर्त्तते इति कथं तादृशाहार्य्यस्य संग्रह इति वाच्यम्। तत्र धर्मितावच्छेदकत्वप्रकारत्वयोर्भेदमते स्वनिरूपितविशेष्यतानात्मकत्वं विहाय स्वनिरूपिते विशेष्यतावच्छेदकत्वानवच्छिन्नत्वस्य उक्तत्वात् न दोषः।

न च एवं सति ह्रदो वह्निमान् धूमात् इत्यत्र ह्रदविशिष्टवह्न्यभावेऽव्याप्तिः ह्रदो वह्निमान् वह्न्यभावश्च ह्रदे इति समूहालम्बनाहार्य्यस्य वह्नित्वावच्छिन्नप्रकारकत्वसत्त्वेऽपि वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितावच्छेदकत्वानवच्छिन्नवह्न्यभावप्रकारकत्वविरहेण निरुक्तोभयसम्बन्धेन वह्नित्वावच्छिन्नप्रकारताविशिष्टान्यत्वसत्त्वात् तत्र च ह्रदविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयताया वर्त्तमानत्वेन निरुक्ततादृशनिश्चयावृत्तित्वस्य ह्रदविशिष्टवह्न्यभावत्वावच्छिन्नविषयतायामसत्त्वात् आहार्य्यज्ञानीयविषयताया अनाहार्य्यज्ञानीयविषयतातो निरूपकभेदेन भिन्नतयापि ह्रदे वह्न्यभाव इतिज्ञानीयविषयताया ह्रदो वह्निमान् वह्न्यभावश्च ह्रदे इति समूहालम्बनज्ञानीयह्रदविशिष्टवह्न्यभावविषयतातोऽभिन्नतया प्रामाण्यम्। केवलं ह्रदे वह्न्यभाव इतिज्ञानीयह्रदविशिष्टवह्न्यभावत्वावच्छिन्नविषयताया अपि तादृशसमूहालम्बननिश्चयवृत्तित्वे बाधकाभावात्। अतएव ह्रदो वह्निमान् ह्रदो वह्न्यभाववान् इतिज्ञानीयविषयतातदप्रयोजकम् आहार्य्यज्ञानसमानाकारकानाहार्य्यज्ञानाप्रसिद्धिरिति भट्टाचार्य्यलिखनं न सङ्गच्छते इति वाच्यम्। स्वनिरूपकत्वस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वैतदुभयसम्बन्धेन

प्रकारताविशिष्टान्यत्वं निश्चयत्वम्। तथा च ह्रदो वह्निमान् वह्न्यभाववश्च ह्रदे इति ज्ञाने ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतावत्त्वं वर्त्तते। एवं तादृशप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूताधेयत्वसम्बन्धावच्छिन्नह्रदत्वावच्छिन्नप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविषयताकत्वमपि वर्त्तत इति उभयसम्बन्धेन तादृशप्रकारतावत्त्वात् तादृशज्ञानस्य न निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वं किन्तु ह्रदो वह्निमान् इति ज्ञानस्यैव तत्र ह्रदविशिष्टवह्न्यभावत्वावच्छिन्नविषयताया अवर्त्तमानत्वात् यद्रूपपदेन ह्रदविशिष्टवह्न्यभावस्य वारणसम्भवात् ह्रदविशिष्टवह्न्यभावे लक्षणसमन्वयः।

नच निर्वह्निः पर्वतो वह्निमान् इत्यत्र वह्न्यभावप्रकारतायाः सत्त्वेऽपि तादृशप्रकारताया आहार्य्यज्ञानमात्रवृत्तित्वेन स्वावच्छिन्नप्रतिबध्यताया अप्रसिद्धत्वेन स्वपदेन तस्य वारणं न सम्भवति इति निर्वह्निः पर्वतो वह्निमान् पर्वतश्च वह्निमान् इति ज्ञाने निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमस्त्येवेति तादृशज्ञाने वह्निमत्पर्वतत्वावच्छिन्नविषयताया वर्त्तमानत्वेन वह्निमत्पर्वतस्य वारणासम्भवात् वह्निमत्पर्वतेऽव्याप्तिरिति वाच्यम्। स्वनिरूपकत्वस्वविशिष्टप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वैतदुभयसम्बन्धेन प्रकारताविशिष्टान्यत्वम्। प्रकारतायां वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वैतदुभयसम्बन्धेन। तथा च निर्वह्निः पर्वतो वह्निमान् पर्वतश्च वह्निमान् इति समूहालम्बनज्ञाने निर्वह्निः पर्वतो वह्निमान् इति ज्ञानीया या वह्न्यभावप्रकारता तन्निरूपकत्वं वर्त्तते। एवं निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टा या निर्वह्निः पर्वत

इति ज्ञानीयविषयता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धक-तावच्छेदकीभूता पर्वतो वह्निमान् इतिज्ञानीयविषयतापि वर्त्तते इति निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टान्यत्वं तादृश-समूहालम्बनज्ञाने नास्तीति न वह्निमत्पर्वतेऽव्याप्तिः ।

न च निर्वह्निः पर्वतो वह्निमान् इत्याहार्य्यज्ञानीयवह्निम-त्पर्वतविषयताया वह्न्यभावप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकत्वविरहेण तादृशज्ञानमपि निरुक्तोभय-सम्बन्धेन प्रकारताविशिष्टान्यमेवेति तादृशज्ञानीयवह्निमत्पर्वत-त्वावच्छिन्नविषयतायास्तादृशनिश्चयावृत्तित्वेन तथापि वह्निम-त्पर्वते अव्याप्तितादवस्थ्यमिति वाच्यम् । अप्रमान्यवृत्तियद्रूपाव-च्छिन्नविषयता तादृशनिश्चयावृत्तितद्रूपावच्छिन्नत्वस्य भट्टाचा-र्य्येण विवक्षणीयतया निर्वह्निः पर्वतो वह्निमान् इतिज्ञानीय-वह्निमत्पर्वतविषयताया अप्रमान्यवृत्तित्वविरहेण अप्रमान्यवृत्ति-यद्रूपावच्छिन्नविषयतासामान्यस्य तादृशनिश्चयावृत्तित्वाच्चेतः ।

न च एवमपि निर्वह्निः पर्वतो वह्निमान् निर्वह्निश्च वह्न्य-भाववान् इति समूहालम्बनज्ञाने या वह्न्यभाववत्त्वावच्छिन्नविशे-ष्यतानिरूपितवह्न्यभावप्रकारता तस्यां प्रतिबन्धकतानवच्छेदक-तया तादृशज्ञाने निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्व-मक्षतमेवेति निरुक्तनिश्चयावृत्तित्वस्य वह्न्यभावविशिष्टवह्न्यभाव-वत्त्वावच्छिन्नविषयतायामक्षतत्वात् वह्न्यभावविशिष्टवह्न्यभाव-वति अव्याप्तिरिति वाच्यम् । तत्र वह्न्यभाववत्त्वावच्छिन्नविशे-ष्यकवह्न्यभावप्रकारताकान्यत्वस्य स्वातन्त्र्येण ज्ञाने निवेशात् न वह्न्यभावविशिष्टवह्न्यभाववति अव्याप्तिः ।

एवं वह्न्यभावस्य आधेयत्वसम्बन्धेन वह्न्यभाववत्प्रकारका-न्यत्वमपि तादृशज्ञाने देयमिति । अतो न आधेयतासम्बन्धेन वह्न्यभाववद्विशिष्टवह्न्यभावेऽव्याप्तिः । एवञ्च निर्वह्निः पर्वतो

वह्निमान् इत्यत्र वह्निविशिष्टपर्वतस्य आधेयतासम्बन्धेन पर्वत-विशिष्टवह्न्यादीनां लक्षणसमन्वयार्थं पर्वते वह्न्यभावप्रकारकान्य-त्वस्य आधेयतासम्बन्धेन वह्नौ पर्वतप्रकारकान्यत्वस्य प्रातस्विक-रूपेण निवेशे गौरवात् तेषामनुगतोक्तरूपेणैव निवेशः। वह्न्य-भावविशिष्टवह्न्यभावादौ च तादृशानुगमप्रकारत्वासम्भवात् अ-गत्या प्रातिस्विकरूपेण अभावनिवेशः।

न च निरुक्तोभयाभाववत्त्वनिवेशनं विफलमिति वाच्यम्। यादृशस्थलविशेषे यद्व्याप्यवत्ताज्ञानं व्याप्याभावधर्मितावच्छेद-ककं पक्षे तदभावनिश्चयकाले न जायते पक्षे तद्व्याप्यस्य साध्य-तायां तदभाववत्पक्षे अतिव्याप्तिवारणार्थं तादृशविशिष्टविषयक-निश्चयोत्तरानुमितिसामान्ये उभयाभावस्य निवेशनसार्थक्यात्। अतएव सव्यभिचारिग्रन्थे यद्रूपवत्ताज्ञानं साध्यसन्देहजनकम् इत्यस्य साध्यसन्देहजनकतावच्छेदकीभूता या या प्रकारता तत्त-त्प्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वविवक्षणे व्याप्यसं-शयस्य पक्षे व्याप्याभावप्रकारकत्वे सति पक्षे व्याप्यप्रकारक-ज्ञानत्वेन यदि कारणता तदा साध्यसन्देहजनकतावच्छेदकी-भूतयावत्प्रकारतान्तर्गतव्याप्याभावप्रकारतावच्छेदकीभूतव्याप्या-भावत्वस्य व्याप्येऽसत्त्वात् व्याप्येऽतिव्याप्तिर्न सम्भवति। अतः पक्षे व्याप्यप्रकारकज्ञानत्वेनैव व्याप्यसंशयस्य व्यापकसंशयहेतु-त्वमते एव व्याप्येऽतिव्याप्तिः।

एवञ्च व्याप्यवत्तासंशये अप्रामाण्यनिश्चयकाले व्यापकसंश-यानुत्पत्त्या व्याप्यसंशये अप्रामाण्यसंशयकाले व्यापकसंशयो-त्पत्त्या अप्रामाण्यनिश्चयाभावविशिष्टव्याप्यवत्ताज्ञानत्वेनैव व्या-पकसंशयं प्रति हेतुत्वस्य वाच्यतया यत्र सन्दिग्धाप्रामाण्यकपक्षे व्याप्यवत्तानिश्चयः तदनन्तरमपि पक्षे व्यापकसंशयोत्पत्तिरित्या-शङ्क्य यादृशस्थलविशेषे पक्षे व्यापकसंशयस्य इतरसकलकारण-

सत्त्वे पक्षे व्याप्यवत्तानिश्चये अप्रामाण्यसंशयो न जातस्तत्रैव व्यापकसंशयं प्रति अप्रामाण्यनिश्चयाभावविशिष्टव्याप्यवत्ताज्ञानत्वेनैव हेतुत्वस्य वक्तुमशक्यतया तत्रैव व्याप्ये अतिव्याप्तिवारणार्थं ज्ञानपदं निश्चयपरमित्युक्तं मदाधरेण।

ननु अत्रापि कल्पे मेयत्वविशिष्टव्यभिचारे अतिव्याप्तिवारणार्थं विशिष्टान्तराघटितत्वमवश्यं निवेशनीयम्। तथासति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमाभाववद्धूमव्यभिचारिवह्निमद्वृत्तिरूपबाधे धूमव्यभिचारिवह्निरूपव्यभिचारघटिते अव्याप्तिरिति वाच्यम्। पक्षविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिज्ञानत्वव्यापकं यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारताकत्वं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकनिश्चयावृत्तियद्रूपावच्छिन्नविषयतासामान्यं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकनिश्चयावृत्तित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदिका यद्धर्मावच्छिन्नविषयता तद्धर्माविषयकप्रतीतिविषयतावच्छेदकतद्रूपावच्छिन्नवत्त्वस्य निवेश्यत्वान्न दोषः। तथा च मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयतापक्षविशेष्यकसाध्यवैशिष्ट्यावगाहिपक्षविशेष्यकसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वव्यापकं हेतुविशेष्यकव्याप्तिप्रकारकनिश्चयावृत्ति भवति। परन्तु तादृशनिश्चयावृत्तिव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नविषयतापि भवति। इति व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारे असत्त्वात् न मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः।

स्वनिरूपकत्वस्वविशिष्टविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वैतदुभयसम्बन्धेन

प्रकारताविशिष्टान्यत्वमेव निश्चयत्वम्। स्ववैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वैतदुभयसम्बन्धेन। तथा च ह्रदो वह्निमान् धूमात् इत्यत्र ह्रदो वह्निमान् न वा ह्रदो वह्निव्याप्यधूमवान् न वेति संशये वह्नित्वावच्छिन्नप्रकारतायाः स्वनिरूपकत्वसम्बन्धेन अधिकरणत्वम्। एवं तादृशप्रकारताया निरूपकत्वसम्बन्धेन आश्रयीभूता या वह्नित्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या समानाकारकज्ञानीयैकविषयिता तदङ्गीकर्त्तृमते ह्रदो वह्निमान् न वेति संशयीयवह्न्यभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यता तद्वत्त्वमपि वर्त्तते इति न निरुक्तसम्बन्धेन प्रकारताविशिष्टान्यत्वं तत्रास्तीति न तस्य निश्चयत्वमिति। तादृशसंशये वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायाः सत्त्वेऽपि न वह्न्यभाववद्ध्रदादावसम्भवः। निर्वह्निः पर्वतो वह्निमान् इत्यत्र निर्वह्निः पर्वतो वह्निमान् निर्वह्निः पर्वतो वह्निव्याप्यवांश्च इति समूहालम्बननिश्चयस्य वह्न्यभावप्रकारतानिरूपकत्वसत्त्वेऽपि निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टान्यत्वमक्षतमेवेति तस्य निश्चयत्वनिर्वाहः।

न च निर्वह्निः पर्वतो वह्निमान् इत्यत्र वह्निविशिष्टपर्वतरूपाश्रयासिद्धिविषयतायास्तादृशनिश्चयवृत्तितया वह्निविशिष्टपर्वतरूपतादृशाश्रयासिद्धावव्याप्तिरिति वाच्यम्। भ्रमान्यवृत्तियद्रूपावच्छिन्नविषयता तादृशनिश्चयावृत्तितद्रूपावच्छिन्नस्यैव लक्षणे निवेशनीयतया निर्वह्निः पर्वतो वह्निमान् पर्वतो वह्निमान् इतिज्ञानीयवह्निमत्पर्वतविषयताया भ्रमान्यवृत्तित्वविरहात्। भ्रमान्यवृत्तिर्या केवलं वह्निमान् पर्वत इतिज्ञानीयविषयता तस्याश्च तादृशनिश्चयावृत्तितया तत्र लक्षणगमनसम्भवात्।

न च ह्रदो वह्निमान् वह्न्यभावात् इत्यत्र ह्रदो वह्निमा वह्निव्याप्यवह्न्यभाववांश्च ह्रद इत्यस्य निश्चयत्वानुपपत्तिः त ह्रदो वह्निमान् इतिज्ञानीयवह्नित्वावच्छिन्नप्रकारतानिरूपव त्वस्य तादृशप्रकारताविशिष्टा या ह्रदत्वावच्छिन्नविशेष्यता तनि रूपितप्रतिबन्धकतावच्छेदकविषयतावत्त्वस्य च तत्र सत्त्वादिति वाच्यम्। वह्न्यभाववदवृत्तित्वरूपवह्निव्याप्यत्वस्य स्वस्मिन् स्वा वृत्तिधर्मप्रकारकज्ञानस्येव स्वस्मिन् स्वाधिकरणावृत्तित्वप्रकारव ज्ञानस्यापि आहार्यतया वह्निव्याप्यत्वावच्छिन्नवह्न्यभावविषय तायाः प्रतिबन्धकतानवच्छेदकत्वेन निरुक्तप्रतिबन्धकतावच्छेद कीभूतविषयताघटितोभयसम्बन्धेन तादृशविषयताविशिष्टान्य त्वस्य तत्राक्षतत्वात्।

न च ह्रदो वह्निमान् वह्न्यभाववद्ह्रदकालीनजलात् इत्य ह्रदो वह्निमान् वह्निव्याप्यवह्न्यभाववद्ह्रदकालीनजलवांश्च ह्र इति ज्ञानीयवह्न्यभावप्रकारतानिरूपितह्रदविषयतायाः प्रतिबन्ध कतावच्छेदकतया तादृशज्ञानस्य निश्चयत्वानुपपत्तिरिति वा च्यम्। ह्रदधर्मिकवह्न्यभाववत्ताबुद्धिं प्रति ह्रदधर्मिकवह्निव्या प्यप्रकारकनिश्चयत्वेन प्रतिबन्धकतया ह्रदधर्मिकवह्निव्याप्य प्रकारकनिश्चयात्मकज्ञानीयवह्न्यभाववद्ह्रदविषयतायामपि आ हार्यज्ञानीयत्वेन प्रतिबन्धकतानवच्छेदकत्वात्।

न च ह्रदो वह्निव्याप्यवान् इत्यत्र वह्निव्याप्याभाववा वह्निव्याप्यवान् ह्रदो वह्न्यभाववान् वह्निमांश्च इति समूहालम्ब नज्ञानस्य वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपकत्वसत्त्वेऽपि नि रुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टा या ह्रदो वह्न्यभाववा इति ज्ञानीयह्रदत्वावच्छिन्नविशेष्यता तदवच्छिन्नप्रतिबध्यता निरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वं नास्ति वह्नि व्याप्याभाववान् ह्रदो वह्निव्याप्यवान् इति ज्ञानस्य आहार्य

तया तदीयविषयतायाः प्रतिबन्धकतानवच्छेदकत्वादिति तत्र समानाकारकज्ञानीयविषयताया ऐक्याङ्गीकर्तृमते ह्रदो वह्न्यभाववान् इत्याकारकभ्रमान्यवृत्तिवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयतायाः तत्र सत्त्वात् ह्रदपक्षकवह्निव्याप्यसाध्यकस्थले वह्न्यभाववद्ह्रदे अतिव्याप्तिर्न सम्भवतीति तादृशनिश्चयोत्तरानुमितिसामान्ये इत्यस्य वैयर्थ्यं दुर्वारमेवेति वाच्यम्। यादृशस्थलविशेषे ह्रदो वह्न्यभाववान् इति ज्ञानं कदाचिदपि वह्निव्याप्यवान् ह्रदो वह्न्यभाववान् इत्याकारकाहार्य्यात्मकं न भवति तत्र स्थल एव 'ह्रदपक्षकवह्निव्याप्यसाध्यकस्थले वह्न्यभाववद्ह्रदे अतिव्याप्तिवारणार्थं सामान्यान्तस्य सार्थक्यसम्भवादिति।

न च यादृशस्थलविशेषे उदासीनघटादिविषयकं निर्वह्निः पर्वतो वह्निमान् इत्याहार्य्यज्ञानं न जातं तत्र घटादावतिव्याप्तिः तत्र निर्वह्निः पर्वतो वह्निमान् इत्याकारकप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिनिश्चयावृत्तित्वस्य तादृशोदासीनपदार्थविषयतायां सत्त्वात् उदासीनपदार्थविषयकनिश्चयोत्तरानुमितिसामान्ये निर्वह्निपर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावसत्त्वादिति वाच्यम्। एतादृशसमशीलकल्पमाहत्य अस्वरसस्य जगदीशेन दत्तत्वात्। अत्र वदन्तिकल्पे अस्वरस एवतत्स्थले।

न च घटवद्ह्रदकालीनह्रदो वह्निमान् घटाभाववद्ह्रदकालीनधूमात् इत्यत्र प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयाप्रसिद्धिः घटत्वावच्छिन्नविषयतानिरूपिता या ह्रदत्वावच्छिन्नविषयता तन्निरूपकत्वस्य तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतायां प्रकृतपक्षे प्रकृतसाध्यविषयतावद्भिन्नत्वस्य प्रकृतपक्षे प्रकृतसाध्यव्याप्यहेतुविशिष्टविषयतावद्भिन्नत्वस्य च निवेशनीयत्वात्।

घटवद्ह्रदकालीनह्रदो वह्निमान् तादृशह्रदो वह्निव्याप्यघटा-

भाववद्ध्रदकालीनधूमवान् इति ज्ञाने घटत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतायाः सत्त्वेऽपि तादृशविषयता न प्रकृतपक्षे प्रकृतसाध्यव्याप्यहेतुविषयतावहिर्भूता। एवं घटाभावप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकघटत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतायाः सत्त्वेऽपि तादृशविषयता न प्रकृतपक्षे प्रकृतसाध्यविषयतावहिर्भूता इति न तादृशस्थले निश्चयत्वानुपपत्तिः।

न च तादृशज्ञाने घटाभावद्ध्रदविषयतायास्तादृशप्रकृतपक्षे साध्यवैशिष्ट्यावगाहित्वप्रकृतपक्षे प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयवृत्तितया घटाभावद्ध्रदस्य दोषत्वानुपपत्तिरिति वाच्यम्। भ्रमान्यवृत्तित्वस्य अव्यापकीभूतविषयिताशून्यज्ञानवृत्तित्वस्य वा यद्रूपावच्छिन्नविषयतायां निवेशनीयतया निरुक्तज्ञाने या घटाभावद्ध्रदविषयता तस्यास्तादृशज्ञानीयत्वविरहात् तादृशज्ञानीया या ह्रदो घटाभाववान् इतिज्ञानीयविषयता तस्याश्च तादृशनिश्चयावृत्तित्वे लक्षणसमन्वयसम्भवात्।

न च भ्रमान्यवृत्तित्वस्य यद्रूपावच्छिन्नविषयतायां निवेशेऽपि ह्रदो वह्निमान् जातिमान् वह्न्यभाववान् ह्रदो वह्निव्याप्यवांश्च इति समूहालम्बनज्ञाने भ्रमान्यद् यज्जातिमान् वह्न्यभाववान् इत्याकारकजातिसामानाधिकरण्येन वह्न्यभावावगाहिज्ञानं तदीयविषयतायाः सत्त्वेन वह्न्यभाववद्ध्रदादावतिव्याप्तिरिति अतो यद्रूपावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यज्ञानवृत्तित्वमेव यद्रूपावच्छिन्नविषयतायां निवेशनीयम् एवं वह्न्यभाववान् ह्रदो वह्निमान् इत्याहार्यज्ञानीयवह्न्यभावद्ध्रदत्वावच्छिन्नविषयताया अव्यापकीभूतविषयताशून्यज्ञानवृत्तित्वविरहादेव अव्या-

पकीभूतविषयताशून्यज्ञानीयविषयतासामान्ये तादृशनिश्चया-वृत्तित्वं सम्भवतीति भट्टाचार्य्योक्तभ्रमान्यवृत्तित्वनिवेशनं निष्प्र-योजनमिति वाच्यम्। सम्बन्धघटकविशेष्यतायां यत् प्रकारता-वैशिष्ट्यं तत्र यत् स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वं तत्र निरवच्छिन्नावच्छेदकताकत्वरूपं न निविष्टमिति। ह्रदो वह्निमान् इति ज्ञानीया या प्रकारता तद्विशिष्टा जातिमान् वह्न्यभाववान् इतिज्ञानीयविशेष्यता भवति इति तदवच्छिन्नप्रति-बध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयताया जाति-मान् वह्न्यभाववान् ह्रदो वह्न्यभाववान् वह्निव्याप्यधूमवांश्च इति समूहालम्बनज्ञाने सत्त्वात् तादृशज्ञानस्य निरुक्तनिश्चय-त्वाभावादेव अव्यापकीभूतविषयताशून्यत्वस्य निवेशे प्रयोजना-भावात्।

न च एवं निर्वह्निः पर्वतो वह्निमान् इत्यत्र वह्निमत्पर्वत-रूपाश्रयासिद्धिः तत्र वह्निमज्जातिमति अतिव्याप्तिः निर्वह्निः पर्वतो वह्निमान् जातिमांश्च वह्निमान् इतिज्ञाने पर्वतत्वावच्छि-न्नविशेष्यतानिरूपिता या वह्न्यभावत्वावच्छिन्ना प्रकारता तद्वि-शिष्टा या निरुक्तोभयसम्बन्धेन विशेष्यता सा जातिमान् वह्न्य-भाववान् इति ज्ञानीयापि भवति तदवच्छिन्नप्रतिबध्यतानिरूपि-तप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वस्य तत्र सत्त्वात् निरु-क्तसम्बन्धेन प्रकारताविशिष्टान्यत् न तज्ज्ञानं भवति किन्तु वह्नि-मज्जातिमद्विषयकमेव प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिज्ञान-मेव भवति तत्र च वह्निमज्जातिमद्विषयताया अवर्त्तमानत्वात् वह्निमज्जातिमद्विषयकनिश्चयोत्तरानुमितिसामान्ये च निर्वह्नि-पर्वतत्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावसत्त्वात् इति सम्बन्धघटकीभूतविशेष्यतावच्छेदकावच्छिन्नत्वं विशेष्यता-वच्छेदकानिविष्टनिरवच्छिन्नावच्छेदकताकत्वम् विशेष्यतावच्छे-

दकतावच्छेदकावच्छिन्नावच्छेदकताकविशेष्यताकत्वं वा क्वचिद्देयम्। तथा च ह्रदो वह्निमान् धूमात् इत्यत्र ह्रदो वह्निमान् जातिमान् वह्न्यभाववान् इति ज्ञानमपि निरुक्तप्रकारताविशिष्टान्यत् जातम्। तत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताया वर्त्तमानत्वेन असम्भववारणाय अव्यापकीभूतविषयताशून्यज्ञानीयत्वमवश्यं देयमिति भ्रमान्यवृत्तित्वं व्यर्थमेवेति वाच्यम्। संयोगवान् इत्यादौ संयोगः संयोगवान् इत्याश्रयासिद्धिभ्रमविषयसंयोगत्वावच्छिन्ने अतिव्याप्तिवारणार्थं भ्रमान्यवृत्तित्वस्य यद्रूपावच्छिन्नविषयतायाम् अव्यापकीभूतविषयताशून्यज्ञानीयत्वनिवेशेऽपि अवश्यं निवेशनीयत्वात्। अन्यथा संयोगः संयोगवान् इति बाधभ्रमस्यापि संयोत्वावच्छिन्नविषयत्वाव्यापकीभूतविषयताशून्यज्ञानीयतया तदीयविषयता अस्मदुक्तप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाही यः पूर्वोक्तनिश्चयः तदवृत्तितया तादृशविषयताशालिनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावसत्त्वाच्चेति वाच्यम्। यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नविषयत्वं प्रकृतह्रदावच्छिन्नप्रकारत्वाभावः तद्रूपावच्छिन्नत्वस्य विवक्षितत्वात् न तत्र वह्न्यभाववद्ध्रदे दोषः। वह्न्यभाववद्ध्रदविषयतातद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितित्वव्यापको यः तद्रूपावच्छिन्नविशेष्यतानिरूपितमिति सामान्ये ह्रदत्वविशिष्टे वह्निव्याप्यवैशिष्ट्यावगाहित्वाभावासत्त्वात् तत्रातिव्याप्त्यसम्भवादिति कृतं पल्लवितेन।

इति पण्डितकुलपतिना वि, ए, उपाधिधारिणा श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण सङ्कलितः सामान्यनिरुक्तेर्गादाधरीटीकाव्याख्यासहितः।

